॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

१२

# पुरुषसूक्तम्

महामहोपाध्याय-सर्वतन्त्रस्वतन्त्र-श्रीमत्सायणाचार्यप्रणीतसायण-भाष्येण श्रीमन्महीधरकृतवेददीपाख्यभाष्येण पण्डितप्रवर-श्रीमन्मङ्गलाचार्यनिर्मितमङ्गलभाष्येण विद्वच्चूडा-मणिश्रीमत्कमलकृष्णविरचितश्रीनिम्बार्क-मतभाष्येण च समलङ्कृतम्

न्यायोपाध्यायेन

पं० श्रीढुण्ढिराजशास्त्रिणा संशोधितम्



चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० १३९
जड़ाव भवन; के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी
मुद्रक : श्रीगोकुल मुद्रणालय, वाराणसी
संस्करण : द्वितीय वि० सं० २०३७
मूल्य : रु० १२-००



अन्य प्राप्तिस्थान

१. चौखम्भा ओरियन्टालिया
पो० बा० नं० ३२
गोकुल भवन, के. ३७/१०९, गोपाल मन्दिर लेन
वाराणसी–२२१००१ ( भारत )
टेलीफोन : ६३३५४ टेलीग्राम : गोकुलोत्सव

---

शाखा—बंगलो रोड, ९ यू० बी० जवाहर नगर
दिल्ली–११०००७ टेलीफोन : २२१६१७

२. चौखम्भा विश्वभारती
पो० बाक्स नं० १३९
चौक (चित्रा सिनेमा के सामने)
वाराणसी–२२१००१
फोन : ६५४४४

३. चौखम्भा भारती अकादमी
गोकुल भवन, के. ३७/१०९
गोपाल मन्दिर लेन
वाराणसी–२२१००१
फोन : ६३३५४

THE

KASHI SANSKRIT SERIES

12

*****

# PURUṢA-SŪKTAM

( OF ṚGVEDA )

With Sāyaṇa-bhāṣya of Ācārya Sāyaṇa; Vedadīpākhya-Bhāsya of Mahīdhara; Aṅgala-Bhāṣya of Maṅgalācārya and Śrīnimbārka-Bhāṣya of Kamalakṛṣṇa

Edited by

Pt. ŚRĪ ḌHṆḌHIRĀJA ŚĀSTRĪ

CHAUKHAMBHA SANSKRIT SANSTHAN

*Publisher and Distributor of Oriental Cultural Literature*

P. O. Chaukhambha, P. Box No. 139

Jadau Bhawan, K. 37/116, Gopal Mandir Lane

VARANASI ( INDIA )

Second Edition 1981

Price : Rs. 12-00

*Also can be had of*

1. **CHAUKHAMBHA ORIENTALIA**
Post Box No. 32
Gokul Bhawan, K. 37/109, Gopal Mandir Lane
VARANASI-221001 ( India )
Telephone : 65889 Telegram : Gokulotsav

---

**Branch**—Bungalow Road, 9 U. B. Jawahar Nagar
DELHI-110007
Phone : 221617

2. **CHAUKHAMBHA VISVABHARATI**
Post Box No. 139
Chowk ( Opposite Chitra Cinema )
VARANASI-221001
Phone : 65444

3. **CHAUKHAMBHA BHARATI ACADEMY**
Gokul Bhawan, K. 37/109
Gopal Mandir Lane
VARANASI-221001 ( India )

# प्रस्तावना

अस्तीदं भारतं वर्षमखिलगीर्वाणगणजेगीयमानकीर्तिमण्डलं श्रुत्युक्तकर्मज्ञानभाण्डारसमुद्यत्समृद्धिसमुल्लसितञ्च सर्वेषां वर्णानां चतुर्णामाश्रमाणामप्यशेषदुरवगाहधर्माब्धिसमुत्तरणसेतुभूताऽऽदिपुरुष-निःश्वसितवेदत्रयीमहामहिम्नैवेति सुव्यक्तमेव श्रुतिसरोवगाहनचातुरी-प्राप्तशेमुषीणां विपश्चिद्धुरीणानाम्। सा च वेदत्रयी मन्त्रब्राह्मणभेदेन द्विविधा। तत्र मन्त्रस्तावद्यज्ञाद्यनुष्ठानकारणभूतद्रव्यदेवतादिप्रकाशकः। ब्राह्मणस्तु विध्यर्थवादादिप्रतिपादकोऽनेकविधः। वेदश्च प्रयोगभेदेन यज्ञनिर्वाहकत्वादृग्यजुःसामभेदेन भिन्नस्त्रयीसंज्ञितः। त्रय्यामपि मुमुक्षु-परिध्येयपादारविन्दस्य परब्रह्मस्वरूपिणः पुरुषोत्तमस्य भगवतः परम-प्रसादप्राप्तिनिदानं सर्ववेदार्थसारं सर्वाभीष्टदं महापुरुषस्वरूपसम्पादकं पुरुषसूक्तं तत्त्वज्ञानप्रतिपादकत्वादज्ञानान्धकारकूपादुत्तितीर्षूणां परब्रह्म-ज्योतिर्दर्शकत्वेनाऽऽत्मानात्मविचारतो मोक्षप्रदत्वाकेवलपाठकानां पठन-मात्रेण दुरितनिवारणफलश्रुतेश्चातीवाभ्यर्हितमिति मनस्याकलय्य सायण-महीधरभाष्योपेतस्य पुरुसूक्तस्य मुद्रणे प्रवृत्तोऽभूवम्। किन्तूक्त-भाष्यद्वयस्यान्यत्र प्रकाशितत्वाद्दौर्लभ्यविरहेण नातिप्रमना भाष्यान्तर-गवेषणपरायणोऽहम्—

उद्योगेनैव सिद्ध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥

इत्यनुसरन् कतिपयदिनान्त एव प्रातःस्मरणीयश्रीमत्पितृचरण-संगृहीतप्राचीनपुस्तकालयात्कृष्णयजुःशाखानुसारिमङ्गलभाष्यमुपलभ्य निधिमिव दुर्गतोऽहमत्यन्तं हर्षितः। तदवसर एव काकतालीयन्यायेन वृन्दावनवास्तव्यश्रीमत्पंडित–किशोरदासजी–वन्सीवटमहोदयैः प्रेषितं निम्बार्कमतभाष्यं दृष्ट्वा तमानन्दमविन्दं यो वचसामप्यगोचरः। इत्थं भाष्यचतुष्टये सम्पन्नेऽस्य मुद्रणारम्भोऽजनि।

तत्र यद्यपि मङ्गलभाष्यकर्ता कः कस्मिन् वा देशेऽभूत कदा वा तेनेदमलेखीति स्पष्टं नोपलभ्यते, तथापि पुस्तकलेखनशैल्या दाक्षिणात्यः कश्चिद्विद्वद्वरेण्य इति–पुस्तकस्यातिजीर्णत्वाच्च त्रिशतवर्षपूर्वमेवेदं लिखित-मिति च प्रतिभाति। अन्तरान्तराऽन्यथा लिखितानामक्षराणामन्यथा-ऽर्थसङ्गतये व्यवस्थापनात्स्वयं भाष्यकृतैवेदं लिखितमिति कल्पना-यामपि न कश्चिद्बाधः। तैत्तिरीयमन्त्रपाठानुक्रमेण व्याख्यातत्वाच्चायं कृष्णयजुःशाखीय इत्यनुमीयते। मया चैतद्व्याख्यानसौष्ठवावर्जितेन

तैत्तिरीयमन्त्रपाठ एवास्मिन्भाष्यचतुष्टयसंवलितपुरुषसूक्ते मुख्यत्वेन धृतष्टिप्पण्याञ्च तत्र तत्र शुक्लयजुषामाश्वलायनानाञ्च पाठक्रमः सूचित इति द्रष्टव्यम्। भाष्ये चास्मिन् मङ्गलाचार्येण दशोपनिषदां ब्रह्मसूत्रादीनाञ्च संवादप्रदर्शनेन यथा विद्वज्जनहृदयपुण्डरीकविकासिनी वेदान्ताभिमतार्थपुष्टिकरी व्याख्याप्रौढीचातुरी प्रदर्शिता तथाऽवलोकनेनैव व्यक्तिभविष्यतीत्यलं तत्प्रशंसापरिपाटीमवलम्ब्य स्वपण्डापाण्डित्यप्रदर्शनेनेति।

[1]निम्बार्कमतभाष्यन्तु वृन्दावनविहारिणा श्रीभगवन्नन्दनन्दनकृष्णचरणारविन्दपरिचर्यापरायणेन सनाढ्यकुलसंभूतेन निम्बार्कमतश्रद्धालुना विजयरामतनूजन्मना पण्डितपवरकमलकृष्णशर्मणा चतुर्दशाधिकैकोनविंशतितमे १९१४ संवत्सरे निरमायीति—

माघे मास्यसिते पक्षे चतुर्थ्यां सूर्यवासरे।
वेदेन्दुनन्दपृथ्व्यङ्के वत्सरे पूर्णतामगात्॥

इत्यन्तलिखितपद्येनैवावगम्यते। निम्बार्कभाष्यकर्तुरपि बृहदारण्यकादिश्रुतिब्राह्मणोपनिषद्भागवतगीतादियुक्तिबलात् यद्वेत्यादिना प्रतिमन्त्रं व्याख्यानान्तरशैली पुरुसूक्ताक्षरार्थव्याख्यानन्दामृतपानरसिकानां सहृदयानां विशेषतश्च तन्मतावलम्बिनां मानसममन्दामोदसंभारसंभृतमवश्यं विधास्यतीति।

तदिदं पुरुषसूक्तं पुण्यपत्तनस्थानन्दाश्रमसंस्कृतग्रंथावल्यादौ मुद्रितमपि मया सानन्दं भूयोपि 'हरिदाससंस्कृतग्रन्थमालासमाख्य–काशीसंस्कृतसीरिजपुस्तकमाला'–सम्पादकसेठहरिदासगुप्तात्मजजयकृष्णदासमहोदयानुरोधादनल्पपरिश्रमेण संशोध्य विद्याविलासयन्त्रालये मुद्रितम्। कृतेऽपि सम्यक् संस्करणेऽस्मादृशाल्पमतिशेमुषीसुलभानि स्खलनानि विचार्य प्रबोधयन्तु विचक्षणा विद्वांसः येनाग्रिमसंस्करणे यतेयास्य विशेषतो निर्दोषतासम्पादनाय। दृष्टिदोषोपनताश्चाशुद्धीः क्षाम्यन्तु दयापरा दोषज्ञाः सफलयन्तु च मामकीनं परिश्रममिति च भूयो भूयः परमेश्वरं प्रार्थयते—

ज्येष्ठशुद्धदशम्याम्
संवत् १९८०

विपश्चिदनुचरः—
ढुण्ढिराजशास्त्री

---

१. सर्वत्रास्मिन् पुस्तके प्रमादात् रामानुजभाष्यनाम्ना शिरःप्रतीकेण मुद्रितं निम्बार्कमतभाष्यमेव विज्ञेयम्।

भाष्यचतुष्टयोपेतपुरुषसूक्तस्य विषयानुक्रम-

# सूचीपत्रम्

# विषयसूचीपत्रम् ।



—:*:—

भाष्यचतुष्टयोपेतपुरुषसूक्तस्य

# शुद्धिपत्रम् ।



| अशुद्धम् । | शुद्धम् । | | |
|---|---|---|---|
| चतुष्यात्प- | चतुष्पात्प- | २ | १४ |
| आश्वलायन- | तैत्तिरीय- | २१ | २७ |
| तैत्तिरीयाणां- | आश्वलायनानां | २१ | २८ |
| महीधरभाष्यम् | मंगलभाष्यम् | ३४ | १ |
| ——— | महीधरभाष्यम् | ,, | ३ |
| १३ | १४ | ३९ | २१ |
| १४ | १५ | ४० | ३९ |
| मुमुक्ष | मुमुक्षु | ६३ | १५ |

अत्र दृष्टिपात्रमात्रबोध्यानामशुद्धीनां निवेशो न कृतः इति द्रष्टव्यम् ।



# अथ पुरुषसूक्तम् ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥
पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥
एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥४॥
ततो विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥६॥
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥७॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥८॥
तस्मात् यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ॥
पशूँस्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥९॥
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥१०॥
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥११॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥१२॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥१३॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥१४॥
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१५॥

*वेदाहमेतं पुरुषं महान्तम्
आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरः
नामानि कृत्वाऽभिवदन्यदास्ते ॥ १ ॥
*धाता पुरस्ताद्यमुदाजहार
शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यते ॥ २ ॥
यज्ञेन यज्ञमयजन्त देवास्ता-
नि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त
यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

इति पुरुषसूक्तं समाप्तम्

—:*:—

# अथोत्तरनारायणम् ।

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च
विश्वकर्म्मणः समवर्त्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति
तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥

वेदाहमेतम्पुरुषम्महान्तमा-
दित्यवर्णन्तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥१८॥

प्रजापतिश्चरति गर्भेऽ अन्तर-
जायमानो बहुधा विजायते ।
तस्य योनिम्परिपश्यन्ति धीरा-
स्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥१९॥

यो देवेभ्यऽ आतपति यो देवानाम्पुरोहितः ।
पूर्व्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२०॥

रुचम्ब्राह्मञ्जनयन्तो देवाऽ अग्रे तदब्रुवन् ।
यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽ असन्वशे ॥२१॥

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुम्मऽइषाण
सर्व्वलोकम्मऽ इषाण ॥२२॥

इत्युत्तरनारायणम् ॥

—•—

ॐ तत्सद्ब्रह्मणे नमः ।

अथ भाष्यचतुष्टयोपेतं

# पुरुषसूक्तम् ।

तत्र प्रथमा ऋक् —

हरिः ॐ । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

सहस्रऽशीर्षा । पुरुषः । सहस्रऽअक्षः । सहस्रऽपात् । सः ।
भूमिम् । विश्वतः । वृत्वा । अति । अतिष्ठत् । दशऽअङ्गुलम् ॥ १ ॥

तत्र ऋक्शाखीयं—

## श्रीमत्सायणाचार्यप्रणीतपुरुषसूक्तभाष्यम् ।

सहस्रशीर्षेति षोडशर्चं षष्ठं सूक्तम् । नारायणो नाम ऋषिः । अन्त्या त्रिष्टुप् । शिष्टा अनुष्टुभः । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः "पुरुषान्न परं(१) किञ्चित्" इत्यादिश्रुतिषु प्रसिद्धः स देवता । तथा चानुक्रान्तम्—सहस्रशीर्षा षोडश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तं त्विति । गतो विनियोगः ॥

सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः, सोऽयं सहस्रशीर्षा । सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम् । एवं सहस्राक्षत्वं सहस्रपात्त्वं च । स पुरुषो भूमिं(२) ब्रह्माण्डगोलकरूपां विश्वतः सर्वतो वृत्वा परिवेष्ट्य दशाङ्गुलपरिमितं देशमत्यतिष्ठदतिक्रम्य व्यवस्थितः । दशाङ्गुलमित्युपलक्षणम् । ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥ १ ॥

---

(१) पात्रापरमिति पाठान्तरम् । (२) भूमिब्रह्माण्डरूपातीतश्च भूमिं पा० ।

श्रीमदाद्यादिगुरुदत्तात्रेयाय नमः ॥

## श्रीमङ्गलाचार्यकृतं भाष्यम् ।

दत्तात्रेयमहं व्रजामि शरणं सर्वज्ञमीशेश्वरं
यं नत्वा द्रुहिणादयोऽपि कृतिनः, कुर्वेऽथ भाष्यं मुदा ॥
सूक्तस्यास्य गरीयसः परमया भक्त्या च देवे गुरौ
तस्मिन्नात्मचिदेकसारजलधौ तत्त्वप्रदीप्त्यै नृणाम् ॥ १ ॥

अथ पुरुषसूक्तस्य पुरुषात्मकत्वात्तस्य च त्वम्पदाभिधेयत्वाच्चादौ तत्पदवाच्यलक्ष्यार्थयोर्वाच्यमाह। पुरूणि महदादितत्त्वानि सनोति मायोपेतत्वेनेति पुरुषो—"यतो वा इमानि भूतानि जायन्त" इति "इन्द्रो मायाभिः पुरुरूप ईयत" इति च श्रुत्यन्तरात्, महदादिविराडन्तसर्वजगदात्मकः परमात्मा पुरुषशब्दाभिधेय इत्यर्थः। अनेन तत्पदवाच्यमुक्तम्। तथा च तस्यैव लक्ष्यार्थमुद्बोधयति—पुरुषः "पूर्वमेवाहमिहासमिति, तत्पुरुषस्य पुरुषत्वमिति" श्रुतेः सन्मात्रं ब्रह्म "सदेव सोम्येदमग्र आसीदिति" च श्रवणात् पूर्वोक्तमहदादिसकलजगदधिष्ठानं शुद्धबुद्धसत्यचिदानन्दनित्यनिर्विकारनिरुपाधिकं ब्रह्मैव सृष्टेः पूर्वमेव स्थितत्वात् पुरुष इत्यर्थः। अनेन पुरुषशब्दस्य द्वौ तत्पदवाच्यलक्ष्यार्थावुक्तौ। अथ त्वम्पदवाच्यलक्ष्यार्थावुच्येते। तत्र वाच्यार्थमुत्थापयति—पुरूणि शरीराणि स्वीकरोति—पुरुभिर्मनइन्द्रियादिभिः सीदतीति वा पुरुषः 'रूपं रूपं प्रति रूपो बभूव' "अविद्यायामन्तरवर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः अन्धेनैव नीयमाना यथान्धाः" 'द्वा सुपर्णा सयुजा सखाया, तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति च'—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः जनयन्तीं सरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥

इति च बह्वीनां श्रुतीनां विद्यमानत्वात् देहेन्द्रियादिमायाकार्योपाधिकत्वात् त्वम्पदवाच्योयं पुरुष इत्यर्थः। तथाच लक्ष्यार्थत्वेन शुद्धजीवं प्रत्यगात्मानं प्रतिपादयति—पूर्षु देवर्षिनरतिर्यगादिशरीरेषु शेत इति पुरुषः—"एको देवः सर्वभूतेषु गूढ" इति श्रवणात्। तथा च गायत्र्यास्तृतीयपादेनाप्ययमेवार्थोऽभिधीयते। धियो यो नः प्रचोद-

मङ्गलभाष्यम् ।

यदित्यस्य मन्त्रचरणस्यार्थः—नोऽस्माकं बुद्ध्याद्युपाधिमतां जीवानां धियो बुद्धीस्तदुपलक्षितमनःप्रमुखेन्द्रियादीनीति यावत् । योऽन्तर्यामी चिदात्मा प्रचोदयात् प्रेरयेत् तत्तद्विषयेषु प्रवर्तयेद्यतस्तेषां स्वतो जडत्वादिति । त्वम्पदलक्ष्यार्थ आत्मा कूटस्थस्तत्सवितुरित्यादिपदैर्निर्दिष्टेनाद्वयपरब्रह्मणा धीमहीतिपदेन तदीयासिपदस्थानीयेनैक्यं बोधयतीति समासतो वेदमातुः समग्रार्थो दर्शितः । एवं तावत्पुरुषशब्दार्थमुक्त्वा तस्य च तत्पदवाच्यार्थत्वेन यच्छबलब्रह्मत्वमुक्तं तदेव वैराजपुरुषरूपेण सहस्रशीर्षेत्यादिवाक्यैर्भूमत्वमनुवर्णयति श्रुतिः । ननु प्रथमतो उक्तस्य सहस्रशीर्षेति वाक्यस्यार्थमनुक्त्वा तृणजलूकन्यायेनाग्रपदं व्याख्यातं किमेतदनुक्रमं विहाय व्युत्क्रममिति चेत्, न विशेष्यविशेषणयोरंशांशिनोर्वा विशेष्यांशिनोरेवाग्रग्राह्यत्वात्किञ्चिद्विरोध इत्याशंकां परिहृत्य प्रकृतमनुसरन्नाह—सहस्रशः शीर्षाणि शिरांसि मुकुटकुण्डलादिमन्ति ब्रह्मरुद्रेन्द्राग्निचन्द्रार्कादीनां यस्य स सहस्रशीर्षा तत्तद्देवताद्यात्मकत्वेन स एव भूमा महापुरुष इत्यर्थः । सहस्राक्षः सहस्रपात् पूर्ववत्सुगमः । स एतादृशः परमेश्वरो ब्रह्माण्डशरीरवान् भूमिं भूशब्दोपलक्षितभूर्भुवःस्वराख्यत्रैलोक्यमित्यर्थः । अत एव विश्वतः समन्ततः सर्वं जगदिति यावत्, वृत्वा आवृत्य अधिष्ठाय, दशाङ्गुलानि मीयन्ते यस्मिन्कर्मणि तद्दशाङ्गुलं अत्यतिष्ठत् अतिक्रम्य अतिष्ठत् स्थितवान् । औपचारिकमिदं वचः परिमातुमशक्यत्वात् सर्वतोऽधिकं व्याप्य तिष्ठतीति भावः ॥ १ ॥

अथ यजुःशाखीयं—

## श्रीमदाचार्यमहीधरकृतं भाष्यम् ।

श्रीगणेशाय नमः ॥

रमाकान्तं गिरं नत्वा हेरम्बं शिवमम्बिकाम् ।
एकत्रिंशेऽधुनाऽध्याये वेददीपो वितन्यते ॥

कात्या० नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति (१।२१।११) ।
अस्यार्थः—नियुक्तान् ब्राह्मणमित्यादिपशून् सहस्रशीर्षेत्यनुवाकेन

महीधरभाष्यम् ।

षोडशर्चेन ब्रह्मा स्तौति होतृवदिति "त्रिः प्रथमां त्रिरुत्तमाम्" इत्याद्युक्तप्रकारेणेत्यर्थः ॥

का० त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्यवेयाद्ग्रामे वा विवत्सन्नरण्योः (२१।१।१७।१८)। त्रैधातवी उदवसानीयेष्टिः तदन्ते "अयं ते योनिः" इत्यग्नी आत्मनि समारोह्य तदुष्माणमास्ये प्रवेश्य "अद्भ्यः सम्भृत" इति षडृचेनानुवाकेन सूर्यमुपस्थाय पश्चादपश्यन्वनं गत्वा ग्रामं नागच्छेत् । वानप्रस्थो भवेदित्यर्थः । यद्वा ग्रामे वस्तुमिच्छन् अरण्योरग्नी समारोप्याकोंपस्थानानन्तरं ग्रामे गत्वा यज्ञान्कुर्यादिति सूत्रार्थः ॥

अथ मन्त्रार्थः । नारायणपुरुषदृष्टा जगद्बीजपुरुषदेवत्याः षोडश ऋचः पञ्चदशानुष्टुभः षोडशी त्रिष्टुप् । "ब्रह्मणे ब्राह्मणम्" इत्याद्याः पुरुषमेधरूपस्य परमात्मनोऽवयवाः पूर्वाध्यायान्ते प्रोक्तास्तेषामवयवी पुरुषोऽत्र स्तूयते । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः "पुरुषान्न परं किञ्चित्" इत्यादिश्रुतिषु प्रसिद्धः सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराजाख्योऽस्ति कीदृशः ? सहस्रशीर्षा । सहस्रशब्दो बहुत्ववाची । संख्यावाचकत्वे सहस्राक्ष इति विरोधः स्यात् । नेत्रसहस्रद्वयेन भाव्यम् । ततः सहस्रमसंख्यानि शीर्षाणि शिरांसि यस्य सः । "शीर्षश्छन्दसि" पा० ६।१।६० इति शिरःशब्दस्य शीर्षन्नादेशः । शिरोग्रहणं सर्वावयवोपलक्षणम् । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तस्यैवेति सहस्रशीर्षत्वम् । एवमग्रेऽपि । सहस्राक्षः सहस्रमक्षीणि यस्य सः । अक्षिग्रहणं सर्वज्ञानेन्द्रियोपलक्षणम् । सहस्रपात् सहस्रं पादा यस्य । "सङ्ख्या सुपूर्वस्य" (पा० ५।४।१४०) इति पादस्यान्त्यलोपः । पादग्रहणं कर्मेन्द्रियोपलक्षणम् । सः पुरुषो भूमिं ब्रह्माण्डलोकरूपां (१)सर्वतः तिर्यक् ऊर्ध्वमधश्च स्पृत्वा व्याप्य, स्पर्णोतिर्व्याप्तिकर्मा । यद्वा भूमिशब्दो भूतोपलक्षकः । पञ्च भूतानि व्याप्य । दशाङ्गुलपरिमितं देशमत्यतिष्ठत् अतिक्रम्यावस्थितः । दशाङ्गुलमित्युपलक्षणम् । ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ।

यद्वा नाभेः सकाशाद्दशाङ्गुलमतिक्रम्य हृदि स्थितः । नाभित

---

(१) अत्र विश्वतो वृत्वेत्यत्र सर्वतस्पृत्वेति याजुषः पाठो ज्ञेयः बोध्यः ।

महीधरभाष्यम् ।

इति कुतो लभ्यते "कतम आत्मा" ? इत्युपक्रम्य "सोऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति" श्रुतेः विज्ञानात्मनो हृद्यवस्थानं कर्मफलोपभोगाय अन्तर्यामिणो नियन्तृत्वेन । तदुक्तम्—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ (मुण्ड० ३ । १ । १) इति । स पुरुषोऽत्र देवता । तथा च श्रुतिः—"इमे वै लोकाः परममेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः" (१३ । ६ । २ । १) इति ॥ १ ॥

## श्रीरामानुजभाष्यम् ।

श्रीमते हयग्रीवाय नमः ।
श्रीमते निम्बार्कायनमः ।
हरिः ॐ ।

अभयवरदमूर्त्तिं श्वेतपद्मासनस्थं
विधिभवसनकाद्यैः सेव्यमानं समन्तात् ॥
स्वधृतनिगमभागान् बोधयन्तं मुनीनां
तमहममरवन्द्यं सम्भजे श्रीहयास्यम् ॥ १ ॥
अज्ञानार्णवमग्नानां समुद्धारपरायणम् ।
वन्देहं परमाचार्य्यं श्रीनिम्बार्कमहामुनिम् ॥ २ ॥
श्रीगोवर्धनस्वामिनं गुणनिधिं श्रीकृष्णभक्तिप्रदं
विद्वद्वृन्दविराजितं सुखकरं सौभाग्यरत्नाकरम् ॥
राधाकृष्णपदारविन्दमनिशं ध्यायन्तमत्यादरात्
वन्देहं विमलार्थद्योतनपरं निम्बार्कवंशप्रभुम् ॥ ३ ॥
श्रीमुकुन्दं गुरुं नत्वा कृष्णरूपिणमीश्वरम् ।
श्रीकृष्णकृतसर्वस्वं सदा कृष्णजनप्रियम् ॥ ४ ॥
सनाढ्यकुलसंभूतं रघुनाथं पितामहम् ।
नमामि जनकं चाहं रामं विजयपूर्वकम् ॥ ५ ॥
कृष्णप्रीतिपरां व्याख्यां स्तोत्रराजशिखामणेः ।
इन्दिराकृष्णशर्माहं कुर्वे ह्यर्थप्रकाशिकाम् ॥ ६ ॥

अथेह सकलविश्वजन्माद्यभिन्ननिमित्तोपादानकारणभूतस्य वा-

रामानुजभाष्यम् ।

त्सल्यादिगुणार्णवस्य मुमुक्षुपरिध्येयपादपद्मस्य श्रीलक्ष्मीकान्तवासुदेवमधुसूदनविष्णुहृषीकेशराधाप्रियगोविन्दादिशब्दाभिधेयस्य,परब्रह्मणः पुरुषोत्तमस्य श्रीब्रह्मेशेन्द्रादिवन्दितचरणारविन्दस्य भगवतः परमप्रसादहेतुभूतं सर्ववेदार्थसारं सर्वेषामभीष्टकारकं पुरुषसूक्तं व्याख्यास्ये । तत्र स्वाभाविकाभिन्नाभिन्नस्वरूपस्य भगवतस्तत्त्वंपदार्थनिरूपणपूर्वकत्वात्तत्पदवाच्यज्ञेयस्य व्यापकतां दर्शयन् स्तौति सहस्रशीर्षेति । अत्र सहस्रशब्दोऽसंख्यातवचनपरः, तदर्थस्मृतौ भगवतैवोक्तत्वात्—

सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमँल्लोके सर्वमावृत्य तिष्ठति ॥ इति ।

भूमिशब्दो ब्रह्माण्डान्तःप्राणिदेहवाचकः । सर्वत इति कालस्वभावजीवादीनां व्यापकतां दर्शयति । सहस्रशीर्षेत्यस्यावयवार्थपरत्वादवयवावयविभावोऽत्र विवक्षितः—"यस्य पृथिवी शरीरं यं पृथिवी न वेदेति" श्रुतेः । पुरुषशब्दस्यालौकिकार्थपरत्वम्—"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति स्मृतेः । द्वादशाङ्गुलमित्यत्राधिक्यमेव विवक्षितम् । तथाच पुरुष अपरिमितशीर्षवान् कार्यकारणव्याप्यव्यापकात्मात्मीयादिभावैर्व्याप्य स्थितः—"सर्वं समाप्नोषि ततोसि सर्वः" इति स्मृतेः । सहस्राक्ष इत्यत्राक्ष इत्युपलक्षणम् अपरिमितज्ञानेन्द्रिययुक्त इत्यर्थः—"यस्य ज्ञानमयं तपः" इति श्रुतेः । सहस्रपादित्यनेनापरिमितकर्मेन्द्रियवानित्यर्थः । अत्र च परमात्मनः कर्मज्ञानेन्द्रियावयविभावेन सर्वनियामकत्वं सर्वाधारत्वं सर्वप्रकाशकत्वं चोक्तं—"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतेः । सभूमिमिति भूमिशब्दः सर्वकारणीभूतप्रकृतिमारभ्य भूमिपर्य्यन्तकार्य्यवाचकः भूयते सर्वं यया सा भूमिः प्रकृतिः तया सह वर्तते इति सभूमिः प्रकृतिजीवकालस्वभावात्मकं समुदायमित्यर्थः । सर्वतस्पृत्वेति । सर्वतो बहिरन्तरात्मना प्रकृत्यादिसमुदायं पृत्वा व्याप्य । पृङ् व्यायामे । सर्वत इति नमस्कारादित्वात्स इति सत्त्वम् । द्वादशाङ्गुलमतिक्रम्यातिष्ठत् सर्वं कार्यजातं व्याप्य ततोऽप्याधिक्येन स्थित इत्यर्थः ।

यद्वा पुर उषति प्रकाशयतीति पुरुषः दाहप्रकाशयोरेकाधिकरणत्वात् नाभेरूर्ध्वं द्वादशाङ्गुलमतिक्रम्यातिष्ठत् हृत्पद्मे इति या-

रामानुजभाष्यम्।

वत्। अन्यत्सुगमम्।

यद्वा पुरुषस्तुर्यः त्रिभिर्विशेषणैर्विश्वतैजसप्राज्ञानां ग्रहः। तथाच सहस्रशीर्षा इत्यत्रावयवावयविभावेन जाग्रदवस्था, सहस्रपादित्यनेन दृष्टश्रुतस्य सूक्ष्मत्वेन परिज्ञानात्स्वप्नावस्था, सहस्राक्ष इत्यनेन प्रज्ञामात्रस्यावशेषत्वात्सुषुप्तिः। उत्तरार्द्धं पूर्ववत्।

यद्वा केवलरूढ्या परैकवेद्यः पुरुषः। अन्यविशेषणैः पश्यन्त्यादीनां सङ्ग्रहः।

यद्वा व्यूहपरत्वेन व्याख्येयम्। पुरुषशब्दस्य वासुदेवपरत्वाच्चित्ताहङ्कारमनोबुद्धीनां सङ्ग्रहः। विश्वतो वृत्वेति पाठे सभूमिं कार्यकारणात्मकस्थूलसूक्ष्मरूपं भूतसमुदायं विश्वरूपेण व्यापकरूपेण व्याप्यातिष्ठत्। दशाङ्गुलमिति पाठे स एवार्थः। एष एव सर्वावतारहेतुभूतः—

एतन्नानावताराणां निधानं बीजमव्ययम्।
यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादयः॥

इति श्रीभागवतोक्तेः।

हयास्यं परमात्मानं विश्वव्यापिनमीश्वरम्॥
संविद्रूपेण हृत्पद्मे तिष्ठन्तं तमहं भजे॥ १॥

अथ द्वितीया—

पुरु॑ष ए॒वेदं सर्वं॒ यद्भू॒तं यच्च॒ भव्य॑म्।
उ॒ताऽमृ॑त॒त्वस्येशा॑नो॒ यदन्ने॑नाति॒रोह॑ति॥ २॥

पुरु॑षः। ए॒व। इ॒दम्। सर्व॑म्। यत्। भू॒तम्। यत्। च॒। भव्य॑म्। उ॒त। अ॒मृ॒त॒ऽत्वस्य॑। ईशा॑नः। यत्। अन्ने॑न। अ॒ति॒ऽरोह॑ति॥ २॥

सायणभाष्यम्।

यदिदं वर्तमानं जगत्सर्वं तत्पुरुष एव। यच्च भूतमतीतं जगद्यच्च भव्यं भविष्यज्जगत्तदपि पुरुष एव। यथाऽस्मिन्कल्पे(१) वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवास्तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उतापि च अमृतत्वस्य(२)

(१) स्मिन्काले पा०। (२) स्य मोक्षस्य पा०।

सायणभाष्यम् ।

देवत्वस्यायमीशानः स्वामी । यद्यस्मात्कारणादन्नेन प्राणिनामन्नेन भोग्येन नि(१)मित्तेनातिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति । तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः ॥ २ ॥

मङ्गलभाष्यम् ।

एतावता किमायातमित्यत्र फलितार्थमुपदिशति । पुरुषः पूर्वोक्तः परमेश्वर एव एवकारोऽन्यपदार्थस्यात्यन्तनिषेधकः । इदं इदन्तया निर्दिश्यमानं सर्वं सर्वशब्दवाच्यं सचराचरं जगत् "इदम् सर्वं यदयमात्मेति" श्रुतेः पुरुषादन्यन्न किञ्चित् । अनेन सोपाधिकतया निरुपाधिकतया च स एवेदं सर्वमिति भावः । इदंशब्दार्थं विभज्य दर्शयति–यद्भूतं यच्च भव्यम् । भूतं पूर्वजातं महदादि, यत् भव्यं भवितुमर्हं भावि भविष्यदिति यावत् यच्च जङ्गमाजङ्गमात्मकं भौतिकजातम् । भूतभव्यापेक्षया वर्तमानमप्यावश्यकं;वात्कि नोक्तम् ? यद्येवं तर्हि इदंशब्देन पूर्वोक्तेन तदप्युक्तमेवेति ज्ञेयम् । ननु वर्तमानभूतभव्यानां स्थितिसर्जनसंहारत्वात् तदात्मकत्वे तद्विकारित्वापत्तेर्न किञ्चिन्महत्त्वमीयते चेत्तन्महत्त्वकारणमापवर्ग्यहेतुत्वमुच्यत इत्याह उतामृतत्वस्येशान इति । उत अपि तु अमृतत्वस्य न मृतममृतं मरणधर्मशून्यं प्रलयेऽपि, अन्यथा स्वर्गिपेयामृतस्य प्रलयकालकलितत्वेन बाधदर्शनात्,–

न जन्मदेहेन्द्रियबुद्धिरस्ति न भूमिरापो मम वह्निरस्ति ।
न चानिलो मेऽस्ति न चाम्बरञ्च एवं विदित्वा परमात्मरूपम् ॥

इति कैवल्योपनिषत्प्रतिपादितं जन्मजरामरणादिधर्मविधुरं ब्रह्म आत्मा,—

"न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराण"इति स्मरणाच्च । तस्य भावस्तत्त्वं ब्रह्मात्मस्वरूपं मोक्षपदमिति यावत् । तस्येशानः ईशनशीलः प्रभुरधिकारीति यावत्–"यद्गत्वा न निवर्तन्ते तद्धाम परमं ममेति" भगवद्वचनात् । अमृतमितिपदेन भक्ष्यत्वादन्नवदस्यापि विकृतिरा-

---

( १ ) मित्तभूतेना० । मित्तीभूतेना पा० ।

मङ्गलभाष्यम् ।

शङ्केत नेत्याह यदन्नेनातिरोहतीति । यदमृतत्वं तदन्नेन अद्यत इत्यन्नम्, अत्तीति वाऽन्नं कर्मफलमित्यर्थः "अद्यतेऽत्ति च भूतानि तस्मादन्नम् तदुच्यत" इति श्रुतेरात्मानात्मविवेकिभिर्यद्भुज्यते तदन्नं परमेश्वरार्पितत्वात्तदद्यत इत्यर्थमापद्यते, उक्तविवेकाभावे केवलासुतृप्त्वार्तैर्यदभ्यवह्रियते तदन्नस्य भगवत्यनर्पितत्वात्तत्तानदमानानेव जनानुक्थश्वास्मानत्तीत्यर्थमापद्यते, तेन तादृशेनान्नेन कर्मफलाभिधेनासैहिकामुष्मिकप्रपञ्चेनेत्यर्थः अतिरोहति न तिरोधानं गच्छति ।

यद्वा अन्ने अन्नशब्दोपलक्षितपृथिव्यादिपाञ्चभौतिकप्रपञ्चे नातिशयेन रोहति रोहणं करोति नाभिमन्यते—मिथ्यात्वात् । न च साक्षितया स्थितत्वात्तत्सम्पर्कगन्धोऽप्यस्यासङ्गस्याक्रियस्य घटते । पुनश्चाविर्भावतिरोभावौ प्रपञ्चस्यैव यत्र भवतस्तस्याधिष्ठानाचिदेकरसस्य निष्प्रपञ्चस्य तौ कुत इत्यत्र श्रुतिगीतां प्रमाणयति—

बृहदुपलब्धमेतदवयन्त्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात् । इति ।

अस्यायमर्थः—उपलब्धं दृष्टं श्रुतञ्च एतत्सर्वं जगत् बृहत् ब्रह्म अवयन्ति जानन्ति विद्वांसः । कुतः ? अवशेषतया सर्वनिषेधावधितयाऽवशिष्यत इत्यवशेषस्तस्य भावस्तत्ता तया यतोऽविकृतात् विकारशून्यात्परमात्मनस्सकाशाद्विकृतेर्विकारभूतस्य विश्वस्य उदयास्तमयौ उत्पत्तिलयौ मृदि वा-वाशब्द उपमायां मृदीव घटशरावादेर्भवत इति शेषः । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति" श्रवणात् ॥ २ ॥

महीधरभाष्यम् ।

यत् इदं वर्तमानं जगत् तत्सर्वं पुरुष एव । यत् भूतमतीतं जगत् यच्च (१)भाव्यं भविष्यं जगत् तदपि पुरुष एव । यथास्मिन्कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमिति भावः । उतापि च अमृतत्वस्य देवत्वस्य ईशानः स्वामी स पुरुषः यत् यस्मात् अन्नेन प्राणिनां भोग्ये-

(१) द्वितीयर्चि भाव्यमिति याजुषः पाठः ।

महीधरभाष्यम् ।

नान्नेन फलेन निमित्तभूतेनातिरोहति स्वीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्पुरुष एव । प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः ।

यद्वा सर्वं पुरुषश्चेत्तर्हि परिणामीत्याशङ्क्याह—अमृतत्वस्यामरणधर्मस्येशानः मुक्तेरीशः । यो हि मोक्षेश्वरो नासौ म्रियत इत्यर्थः । किञ्च यत् जीवजातमन्नेनातिरोहति उत्पद्यते तस्य सर्वस्य चेशानः ब्रह्मादिस्तम्बपर्यन्तो भूतग्राम उक्तः तस्यान्नेनैव स्थितेः "इतः प्रदानाद्धि देवा उपजीवन्तीति" श्रुतेः ॥ २ ॥

रामानुजभाष्यम् ।

एवं स्थूलसूक्ष्मभूतस्य प्रकृत्यादिसर्वकार्यस्य तदात्मकत्वं प्रतिपाद्य कालादीनामपि तदायत्तस्वरूपस्थितिप्रवर्तकत्वेनाभेदं दर्शयति पुरुष इति । एवकारोऽवधारणार्थः । इदं यद्वर्तमानकालीनं यद्भूतमतीतकालीनं यच्च भाव्यं भविष्यत्कालीनं तत्सर्वं पुरुष एव—"सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्चने"त्यादिश्रुतेः,—

यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥

इति स्मृतेः । तथाच अमृतत्वस्य मोक्षस्य ईशानः प्रभुः । उत वितर्के । सर्वात्मकत्वेपि मोक्षदातृत्वं—

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः सर्वैर्मोक्षार्थचिन्तकः ॥

इति विष्णुपुराणोक्तेः, "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्"इत्यादिश्रुतेः । न चैतेन परमात्मनो वैषम्यमिति वाच्यम् विषमतायाः निषेधात्—"वैषम्यनैर्घृण्ये न सापेक्षत्वादिति"सूत्रात् । कुतो मोक्षदातृत्वं यद्यस्मादन्नेनादनीयेन स्वात्मीयविग्रहेणेति यावत् अतिरोहति प्रादुर्भावं लभते । ननु प्रपञ्चाधीशितुः कथं प्रपञ्चवत्प्रादुर्भाव इति चेच्छृणु—ईश्वरविग्रहाणां प्रपञ्चान्तर्गतत्वाभावात् यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमात्मकोऽसौ ? ज्ञानात्मकः "चैतन्यात्मको मोक्षात्मकश्चे"त्यादिश्रुतेः । अत एव न केवलं सर्वात्मक एव किन्तु अमृतत्वस्य नित्यनिजानन्दस्यापीश्वरः प्रभुरिति भावः ॥२॥

अथ तृतीया—

एतावा॑नस्य महि॒माऽतो॒ ज्याया॑ँश्च॒ पूरु॑षः ।
पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥ ३॥

ए॒तावा॑न् । अ॒स्य॒ । म॒हि॒मा । अतः॑ । ज्याया॑न् । च॒ । पूरु॑षः । पादः॑ । अ॒स्य॒ । विश्वा॑ । भू॒तानि॑ । त्रि॒ऽपात् । अ॒स्य॒ । अ॒मृत॑म् । दि॒वि ॥ ३ ॥

सायणभाष्यम् ।

अतीतानागतवर्तमानरूपं जगद्यावदस्त्येतावान्सर्वोऽप्यस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः । न तु तस्य वास्तवं स्वरूपम् । वास्तवस्तु पुरुषोऽतो महिम्नोऽपि ज्यायानतिशयेनाधिकः । एतच्चोभयं स्पष्टी क्रियते—अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादश्चतुर्थांशः । अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपममृतं विनाशरहितं सद्दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठत इति शेषः । यद्यपि "सत्यं ज्ञानमनन्तं ब्रह्म"त्याम्नातस्य परब्रह्मण इयत्ताया अभावात्पादचतुष्टयं निरूपयितुमशक्यं तथाऽपि जगदिदं ब्रह्मस्वरूपापेक्षयाऽल्पमिति विवक्षितत्वात् पादत्वोपन्यासः ॥ ३ ॥

मङ्गलभाष्यम् ।

भवतु एतावता किमायातं परमेश्वरविषय इत्यत्र पूर्वोक्तप्रकारेणेदमेवाखिलं तस्य महित्वमित्यभिदधाति एतावानस्य महिमेति । एतावान् एतादृशो महिमा माहात्म्यमुत्कृष्टत्वमिति यावत् शबलब्रह्मकेवलब्रह्मतालक्षणमहत्त्वमस्य प्रत्यगभिन्नपूर्णाचिदखण्डानन्दजलधेः परमेश्वरस्य नान्यस्याद्वितीयत्वात्, "सर्वं खल्विदं ब्रह्म, एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन, यः सर्वज्ञः स सर्ववित्, सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिकदम्बस्तस्य महिमानमेवोद्घोषयति ।

अतो ज्यायांश्च पुरुष इति । अतः कारणात् प्रबलबहुश्रुतिप्रतिपादितस्य ज्यायान् ब्रह्मादिदेवताभ्यो वरीयान् ।

मङ्गलभाष्यम् ।

यद्वा "महतो महीयान्" इति श्रवणात् ब्रह्मादिस्थावरान्तजगद्बीजान्महत्तत्त्वतो महीयान् गरीयानिति श्रुतेरर्थः । इत्थंभूतप्रभाववान् पुरुषः पूर्णः परमात्मा । चकारः सगुणनिर्गुणयोः समुच्चायकः सगुणो यः स एव निर्गुण इति तात्पर्यम् ।

ननु जगतः सस्थावरणसंयुतत्वेन परिमितत्वादात्मस्वरूपस्य त्वपरिमितत्वात्कुतः सविश्वाविश्वयोः सामानाधिकरण्यं परिमेयत्वापरिमेयत्वलक्षणभेदप्रतीतेरित्याशंक्य, सत्यं सगुणत्वस्य स्वमायाविलसितचातुरीकलनाकलितत्वात्तस्य पूर्णचिदेकरसमहिम्नि विश्वप्रपञ्चस्यैकपादलक्षणपरिमाणवत्त्वात्तद्विशदीकरोति पादोस्य विश्वाभूतानीति । विश्वाभूतानि सर्वाणि भूतानि मायागुणव्यतिकरजातमात्राणि भूतभौतिकानि चराचराणीति यावत् । अस्य परमेश्वरस्य पादः एकपात्परिमितचिद्विलासविभूतिरित्यर्थः ।

यद्वा अस्य परमेश्वरस्यामृतस्वरूपं चतुष्पात्परिमितं तत्रैकपादे तदखिलभूतभौतिकप्रपंचो बहिःप्रपञ्चस्य मृनत्वं मायिकत्वात् । अन्तर्वस्तुनस्त्वमृतस्वरूपादभिन्नमिति ।

तर्हि त्रिपादितिशब्देनौपचारिकेणावशिष्टेनापरिमिताभृतस्वरूपेण स कुत्रास्त इत्यत्राह त्रिपादस्यामृतन्दिवीति । त्रिपात्संख्याकममृतं चित्स्वरूपमस्य परमेशितुर्दिवि स्वर्गे तिष्ठतीति शेषः । एतावता मर्त्यलोकस्याल्पविभूतित्वात् एकपादमृतमुक्तम् "एकांशेन स्थितो जगत्" इति भगवदुक्तेः । ऊर्ध्वलोकस्य महत्त्वात्प्रकाशमत्त्वात्त्रिपादमृतमुदीरितम् ।

वास्तविकार्थस्तु त्रिपादित्यमृतस्य न परिमितत्वं किन्तु दिवि द्योतमाने स्वप्रकाशात्मन्यमृतस्य चिद्रसस्य बृहत्त्वप्रतिपादनान्न किञ्चिद्विरोधः शङ्कनीयः ॥ ३ ॥

महीधरभाष्यम् ।

अतीतानागतवर्तमानकालसम्बद्धं जगद्यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषो विभूतिः न तु वास्तवं स्वरूपम् वास्तवपुरुषस्तु अतः अस्मान्महिम्नो जगज्जालात् ज्यायान् च अतिशयेनाधिकः एतदुभयं स्पष्टीक्रियते—अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पाद-

महीधरभाष्यम् ।

चतुर्थांशः अस्य पुरुषस्यावशिष्टं त्रिपात्स्वरूपम् अमृतं विनाशरहितम् तत् दिवि द्योतनात्मके स्वप्रकाशे स्वरूपेऽवतिष्ठत इति शेषः। यद्यपि "सत्यं ज्ञानमनन्तं ब्रह्मे"त्याम्नातस्य परब्रह्मण इयत्ताया अभावात् पादचतुष्टयं निरूपयितुमशक्यम् तथापि जगदिद ब्रह्मरूपापेक्षयाल्पमिति विवक्षितत्वात्पादत्वोपन्यासः ॥ ३ ॥

रामानुजभाष्यम् ।

एवं तस्य सर्वस्वरूपत्वं सर्वव्यापकत्वं सर्वसाक्षित्वं चोक्त्वा प्रपञ्चात्मकत्वेन श्रेष्ठत्वं निरूपयति एतावानिति। अस्य पुरुषस्य कार्यकारणात्मकस्य भगवतः एतावान् सर्वव्यापकत्वसर्वनियन्तृत्वस्वतन्त्रसत्ताकत्वादिरूपो महिमा माहात्म्यम् । यद्वा प्रपञ्चात्मकत्वे सत्यमृतेशत्वे सति प्रपञ्चानभिभूतत्वमित्येषः अतः कारणाज्ज्यायान् ज्येष्ठः चकारो निश्चयार्थकः।

पादोऽस्येति। अत्र पादशब्दस्याधिष्ठानपरत्वं विश्वाभूतानीत्यस्याधिष्ठेयपरत्वम्। तथा चाधाराधेययोरभेदविवक्षया सामानाधिकरण्यमेकवचनस्य सामान्यार्थपरत्वेन, अस्य पुरुषस्य पादशब्दवाच्यलोकेषु विश्वाभूतानि सर्वाणि भूतानि। यद्वा विश्वशब्दवाच्यानि सर्वाण्यपि भूतानि पाद इव पाद अंशभूत इत्यर्थः-"अंशो नानाव्यपदेशादिति" सूत्रात्, "ममैवांशो जीवलोक" इत्यादिस्मृतेः। तथाच त्रिपाद्रूपममृतं दिवि सत्यलोकजनलोकेष्वमृतक्षेमाभयभेदेन प्रतिष्ठितमिति शेषः। अस्येत्यावृत्त्या हिरण्यगर्भप्रधानादीनां कारणत्वनिरासार्थं तेनास्यैव भगवतो विश्वकर्तृकत्वादिधर्माश्रयत्वमन्येषां त्वौपचारिकम् "रोचितं रोचयाम्यहम्" इत्यादि श्रीभागवतोक्तेः ॥ ३ ॥

अथ चतुर्थी—

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥४॥

त्रिऽपात् । ऊर्ध्वः । उत् । ऐत् । पुरुषः । पादः । अस्य । इह । अभवत् । पुनरिति । ततः । विष्वङ् । वि । अक्रामत् । साशनानशने इति अभि ॥ ४ ॥

सायणभाष्यम् ।

योऽयं त्रिपात्पुरुषः संसारस्पर्शरहितो बहुलस्वरूपः सोऽयमूर्ध्व उदैत् । अस्मा(१)दज्ञानकार्यात्संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान् । स्थितस्य तस्य योऽयं पादो लेशः सोऽयमिह (२)मायायां पुनरभवत् । सृष्टिसंहाराभ्यां पुनः पुनरागच्छति । अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताऽप्युक्तम्—

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति ।

ततो मायायामागत्यानन्तरं विष्वङ् देवतिर्यगादिरूपेण विविधः सन्व्यक्रामद्व्याप्तवान् । किं कृत्वा साशनानशने अभि । अभिलक्ष्य साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातम् । अनशनं तद्रहितमचेतनं गिरिनद्यादिकम् । तदुभयं यथा स्यात्तथा । स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥

मङ्गलभाष्यम् ।

पुनर्दार्ढ्यार्थन्तदेव विशिनष्टि त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनरिति । त्रिपात्पुरुषोऽमृतस्वरूपः ऊर्ध्वे ऊर्ध्वलोके उदैत् उदतिष्ठत् प्रकाशत इत्यर्थः । अस्य पुरुषस्य पाद एकपादमृतमिहास्मिल्लोके अभवात्(३) अभवत् दीर्घश्छान्दसः । पुनरिति शब्दः पूर्वोक्तार्थस्य भूय उक्तत्वात् स्पष्टार्थः

यद्वा वक्ष्यमाणार्थसूचकत्वात्तत्किमित्यत्राह—ततो विश्वङ्व्यक्रामदिति । ततो हेतोरूर्ध्वाधोलोकव्याप्तत्वात् विश्वङ् सर्वतः व्यक्रामत् विशेषेणाक्रमितवान् । यथात्र श्रुतिः—"यदूर्ध्वं गार्गि दिवो अर्वाक् पृथिव्या यदन्तरा द्यावा पृथिवी इमे यद्भूतं भवच्च भविष्यच्चेति" ॥

अत एवोर्ध्वाधोलोकावभिनीय दर्शयति साशनानशने अभीति । अधोलोकस्य साशनत्वं कर्मभूमित्वात् सुखदुःखफलभोगभाजनत्वाच्च । ऊर्ध्वलोकस्य त्वनशनत्वं तत्र कर्मकर्तृत्वतत्फलभोक्तृत्वाभावात्केवलानन्दभाजनत्वाच्च ते साशनानशने प्रवृत्तिनिवृत्ते वर्त्मनी अशनेन कर्मतत्फलखेदमोदात्मकेन सह वर्तत इति साशनम् न विद्यते पूर्वोक्तमशनं यस्मिन् तदनशनं तच्च तच्चेति ते अभीत्यभितो व्यक्रामदिति पूर्वेणान्वयः । उभे इति ऋक्शाखापाठः सुगमः ॥ ४ ॥

---

(१) घ. दल्पात्कार्या' । (२) ख. ग मायया पु' ।

(३) अनेन 'अभवात्' इति ऋक्शाखीयानां पाठश्चतुर्थर्चे बोध्यः ।

महीधरभाष्यम् ।

योऽयं त्रिपात्पुरुषः संसारस्पर्शरहितब्रह्मरूपः अयमूर्ध्वः उदैत् अस्मादज्ञानकार्यात्संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान् । तस्यास्य पादो लेशो जगद्रूपः इह मायायां पुनः अभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति । सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम्—

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् । इति ।

ततो मायायामागत्यानन्तरं विष्वङ् विषु सर्वत्राञ्चतीति विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् । किं कृत्वा साशनानशने अभि अभिलक्ष्य अशनेन सह वर्तमानं साशनम् अशनादिव्यवहारोपेतं चेतनप्राणिजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकम् ते अभिलक्ष्य स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः॥४॥

रामानुजभाष्यम् ।

जगज्जन्मादिकारणीभूतस्य भगवतो विश्वव्यापकत्वेपि तत्संबन्धराहित्यं दर्शयति त्रिपादिति । पुरुषः त्रिपादूर्ध्वमुदैत् त्रयः पादाख्रिपात् त्रिपाद ऊर्ध्व त्रिपादुर्ध्वं त्रिसंख्याकपादशब्दवाच्यजनतपःसत्येभ्य ऊर्ध्वमुपर्य्युदैत् स्वाभिव्यक्तिमकरोत् ।

यद्वा त्रिपादित्यनेनोदरहृदयदहराणां तत ऊर्ध्वमुपरिभागे सहस्रारे पुरुष उदैत्स्वाविर्भावमकरोत्—

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसर पद्धतिं हृदयमारुणयो दहरम् ।
तत उदगादनन्त तव धाम शिरः परमं
पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥

इति वेदोक्तेः ।

यद्वा त्रिपाच्छब्देन जाग्रत्स्वप्नसुषुप्तीनां ग्रहणं तत ऊर्ध्वमुपरिभागे तुरीयायामुदैत्स्वोपलब्धिं प्राप्त इत्यर्थः ।

यद्वा त्रिपाच्छब्देन वेदत्रयी संगृह्यते । तत ऊर्ध्वमित्यनेन यत्र सर्वेषां वेदानां प्रतिपादकतयैकीभावस्तस्मिन्धाम्नि स्वरूपे उपलब्धिं गतः । ननु 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे'त्यादिश्रुतिभ्यं वक्तताया ब्रह्मण्यभावात्कथं प्रतिपाद्यप्रतिपादकभाव इति चेत्

रामानुजभाष्यम् ।

शङ्कायाः श्रुत्यर्थानवगाहित्वात्तथाहि यथा कश्चिदतिदृढतमपराक्रमः पुरुषः समुद्रावगाहने प्रवृत्त इयत्तानिश्चेतुकामो यथाशक्त्यवगाहितः समुद्रस्यापारावारत्वादगाधत्वादियत्तामप्राप्य शक्तिक्षयं च ज्ञात्वा तीरमपि दूरं दृष्ट्वा ततः पश्चान्निवृत्तः पूर्वस्थानमागत्य पुरुषान्वदति समुद्रोऽगाधतलस्पर्शो नावगाहितुं योग्य इति तथेयमपि श्रुतिरियत्तां परिहरति । एतच्च यत इति पञ्चम्यैव प्रतीयते अन्यथा 'सर्वे वेदा यत्पदमामनन्ति, सर्वे वेदा यत्रैकी भवन्ति, शास्त्रयोनित्वात्, तत्तु समन्वयात्, वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्'इत्यादिश्रुतिस्मृतिसूत्रबाध इत्यलं विस्तरेण । अस्य पुरुषस्य इहास्मिन्प्रपञ्चरूपे कार्ये पुनः पश्चात्कार्योत्पत्तिसमये पाद इव पादोंऽश अभवत् यथाग्नेर्विस्फुलिङ्गः 'स ऐक्षत बहुस्यां प्रजायेय' इत्यादिश्रुतेः । ततः कार्योत्पत्त्यनन्तरं विविधं सुष्ठु अञ्चतीति विश्वङ् विश्वरूपो भूत्वा अशनेन सह वर्त्तमाना साशना न अशना अनशना साशना च अनशना च साशनानशने भोगापवर्गसाधनीभूते अभिअभिव्याप्य व्यक्रामत् आक्रान्तवान् साशनाशब्दो वासनापरपर्यायः॥
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते
तयो रन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति श्रुतेः ॥ ४ ॥

अथ पञ्चमी-

**तस्माद्विराळजायत विराजो अधि पूरुषः ।**
**स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥**

तस्मात् । विऽराट् । अजायत । विऽराजः । अधि । पूरुषः । सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इति । पुरः ॥ ५ ॥

सायणभाष्यम् ।

विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते-तस्मादिति । तस्मादादिपुरुषाद्विराड्ब्रह्माण्डदेहोऽजायतोत्पन्नः । विविधानि राजन्ते वस्तून्यत्रेति विराट् । विराजो अधि विराड्देहस्योपरि तमेव

सायणभाष्यम् ।

देहमधिकरणं कृत्वा पुरुषस्तद्देहाभिमानी कश्चित्पुमानजायत सोऽयं सर्ववेदान्तवेद्यः परमात्मा। स एव स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं (१) सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। एतच्चाऽऽथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव' इति । स जातो विराट्पुरुषोऽत्यरिच्यतातिरिक्तोऽभूद्देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। अथो भूमेः सृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज। पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥ ५ ॥

मङ्गलभाष्यम्।

ततः किमभवदिति विवक्षायामाह—तस्माद्विराडजायतेति । तस्मात्पुरुषशब्दवाच्यात्परात्मनः विराड् ब्रह्माण्डशरीरमजायताजनि ।

विराजोऽधिपुरुष इति । विराजो विराट्देहादधिपूरुषस्तदभिमानी पुरुषो वैराजोऽजायतेत्यनुषङ्गः ।

स जातोऽत्यरिच्यतेति । स वैराजः पुमान् जात उद्भूतः सन् अत्यारिच्यत अत्यक्रामत् अतिशयेनारिच्यत प्रकाशितवान् वा ।

पश्चाद्भूमिमथो पुर इति । पश्चादनन्तरं ऊर्ध्वलोकप्रकाशनात् भूमिं भुवं पञ्चाशत्कोटिविस्तीर्णामतलवितलादिसप्तभुवनसंज्ञाम्, अथोऽनन्तरं पुरः जरायुजादिचतुर्विधभूतयोनीः अत्यरिच्यत प्रकाशयामासेति पूर्वेणान्वयः । 'तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाभवदिति' श्रुत्या द्यावापृथिव्यन्तरिक्षलोकानन्तर्बहिश्च भोक्तृभोग्यरूपेणाधिष्ठाय सदसदात्मकः सर्वशरीरवान् स एवाभूदिति भावः ॥ ५ ॥

महीधरभाष्यम्।

विष्वङ् व्यक्रामदिति यदुक्तं तदेव प्रपञ्च्यते—ततः तस्मादादिपुरुषात् विराट् ब्रह्माण्डदेहोऽजायत जातः। विविधं राजन्ते वस्तून्यत्रेति विराट्। विराजः अधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी एक एव पुमानजायत सर्ववेदान्तवेद्यः

१ ल. 'रकृत्वा त' । क. च. 'पं दृष्ट्वा त'।

महीधरभाष्यम् ।

परमात्मा स्वमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवदित्यर्थः । एतच्चाथर्वणोत्तरतापनीये स्पष्टमुक्तम्–'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वात्र प्रविष्ट इव विहरतीति' । किञ्च स जातो विराट्पुरुषोऽत्यरिच्यत अतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज । पर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥ ५ ॥

रामानुजभाष्यम् ।

पूर्वप्रतिज्ञातकार्यस्योत्पत्तिं विस्तरेण दर्शयन् कार्यकारणाधिष्ठातुः कार्याधिष्ठातुश्च प्रादुर्भावमाह-तत इति । तच्छब्दस्य पूर्वपरामर्शित्वेन यश्च पूर्वं व्यापकतया सर्वान्तर्यामितया प्रतिपादितः तस्मात्पुरुषाद्विराट् कार्यकारणरूपः प्रकृत्यधिष्ठाता अजायत स्वाविर्भावमकरोत् । विराजः सकाशात् अधिपुरुषः कार्याधिष्ठाता महतत्त्वाधिष्ठाता अजायत । स जातः सन् महत्तत्वाहङ्काररूपकार्यात्मतया परिणमितः सन् अत्यरिच्यत स्वतन्त्रतयाऽतिरिक्तो भूत्वा अपरिमितशक्तित्वात्-'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेः,–

विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ।
प्रथमं महतः सृष्टिः द्वितीयं त्वण्डसंस्थितम् ॥
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ।

इतिविष्णुपुराणोक्तेः । पश्चाद्भूमिं भूम्यन्तसमुदायमसृजत अथो भूतसमुदाये जाते पुरो देहाद्यसृजत । नन्वेकस्यैव कार्यकारणात्मत्वे सति कर्मकर्तृविरोध इति चेन्न शक्तिविक्षेपपरिणामाङ्गीकारात्-'यथोर्णनाभिः सृजते गृह्णते चेति' श्रुतेः । एतेन विवृतपरिणामवादो निरस्त इति दिक् ॥ ५ ॥

अथ षष्ठी ।(१)

यत्पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत ।
व॒स॒न्तो अ॑स्या॒ऽऽसीदाज्यं॑ ग्री॒ष्म इ॒ध्मः श॒रद्ध॒विः ॥६॥

(१) अथ यजुषा तस्माद्यज्ञादित्यादिमंत्रत्रयं बोध्यम् ।

यत्। पुरुषेण। हविषा। देवाः। यज्ञम्। अतन्वत। वसन्तः। अस्य। आसीत्। आज्यम्। ग्रीष्मः। इध्मः। शरत्। हविः॥ ६॥

सायणभाष्यम्।

यद्यदा पूर्वोक्तक्रमेण देवशरीरेषूत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात्पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतान्वतिष्ठन्। तदानीमस्य यज्ञस्य वसन्तो वसन्तर्तुरेवाऽऽज्यमासीदभूत्। तमेवाऽऽज्यत्वेन सङ्कल्पितवन्त इत्यर्थः। एवं ग्रीष्म इध्म आसीत्। तमेवेध्मत्वेन सङ्कल्पितवन्त इत्यर्थः। तथा शरद्धविरासीत्। तमेव पुरोडाशादिहविष्ट्वेन सङ्कल्पितवन्त इत्यर्थः। एवं पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन सङ्कल्पः। अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन सङ्कल्प इति द्रष्टव्यम्॥ ६॥

मङ्गलभाष्यम्।

अत एव कर्तृकार्यभोक्तृभोग्यरूपत्वेन तमेव हविर्यज्ञदेवतामयमुपपादयति यत्पुरुषेण हविषा देवा यज्ञमतन्वतेति। यः पूर्वमभिहितः पुरुषस्तदात्मकेन हविषा आज्यपशुपुरोडाशादिना होतव्यद्रव्येण देवा ब्रह्मादयस्तदात्मका यज्ञं-इज्यते यज्विभिरिति यज्ञो यज्ञपुरुषः 'त्वं यज्ञो वै विष्णुः' इति श्रवणात् यजनीयं तमेव पुरुषमतन्वत अतन्वन् इयज्ञुरिति यावत्।

तर्हि यज्ञसाधनसंभाराः सम्भ्रियन्तामित्यत्राह वसन्तोऽस्यासीदाज्यमिति। वसन्तो मधुमाधवमासद्वयात्मक ऋतुः 'मधुश्च माधवश्च वासन्तिकावृतू' इति मन्त्रात्। अस्य ऋतुपुरुषस्य जाया इदमाज्यं तेजः लोके वसन्तर्तावजाविकादिपशूनां नवपल्लविततरुपल्लवशाखापत्रपुष्पादिचर्वणात्क्षीरबाहुल्येनाज्यसमृद्धिदर्शनात् स एव वसन्तः स्वस्य यज्ञपुरुषस्य हविराहुतये आज्यरूपो बभूवेत्यर्थः।

तथाच ग्रीष्म इध्म इति। शुक्रशुचिमासयुगात्मक ऋतुः 'शुक्रश्च शुचिश्च ग्रैष्मावृतू' इति मन्त्रात्। ज्वालयाग्निमेधयतीति तथोक्तः

मङ्गलभाष्यम् ।

समित्पुञ्ज आसीदित्यनुषङ्गः। अनेन ग्रीष्मर्तौ सकलगुल्मतरुलतादीनां द्रवशोषणादनलस्तत्समित्संस्कारमात्रेणैधत इति कृत्वा स एव यज्ञेश्वरप्रीत्यै इन्धनराशिरूपोऽभवदित्यर्थः ।

किञ्च शरद्धविरिति । शरत् इषोर्जमासद्वयात्मक ऋतुः 'इषश्चोर्जश्च शारदावृतू' इति मन्त्रात् । हविर्हविष्यं नूतनशाल्यादिव्रीहिधान्यजन्यान्नमासीत् प्रायेण शरदि शाल्यादिनवधान्यागमप्रसिद्धेर्यज्विनो लोके शरत्काल एव आग्रयणोपयोगिनवीनधान्यान्नेन यज्ञपुरुषं यजन्ते अतः स एव यज्ञपुरुषो हविष्ट्वेन हूयत इत्यर्थः। अनेन ऋतुषट्कस्यार्हत्वेपि वसन्ताद्युक्तर्तुत्रयस्य यजनोपयोगिकालत्वमित्युपवर्णितमिति द्रष्टव्यम् ॥ ६ ॥

महीधरभाष्यम् ।

यत् यदा पूर्वोक्तक्रमेण देवशरीरेषु सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं वाह्यद्रव्यस्यानुत्पन्नत्वेन पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वततातनिषत । तदानीमस्य यज्ञस्य वसन्तः ऋतुरेवाज्यमासीत् आज्यत्वेन सङ्कल्पितवन्त इत्यर्थः। एवं ग्रीष्मः इध्म आसीत् ग्रीष्ममेवेध्मत्वेन सङ्कल्पितवन्तः । तथा शरत् हविः आसीत् शरदमेव पुरोडाशादिहविष्ट्वेन सङ्कल्पितवन्तः । पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन सङ्कल्पः अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन सङ्कल्प इति द्रष्टव्यम्॥ अत्र कण्डिकाव्युत्क्रमोऽस्ति अस्यानन्तरं तं यज्ञम् [८] ततः तस्माद्यज्ञात् तिस्रः [९] [१०] [११] क्रमेणैव ततः सप्तास्यासन् [७] इति क्रमोऽपेक्षितः ॥ ६ ॥

रामानुजभाष्यम् ।

तदेवं सर्वोपस्थितस्य जगद्योनेः पुरुषोत्तमस्य साध्यसाधनसाधकादिभिरभेदो दर्शितः। इदानीं कालावयवत्वेन यज्ञाङ्गत्वं प्रतिपादयन्स्तौति यत्पुरुषेणेति । यदिति-तृतीयार्थेऽव्ययम्। येन हविषा हवनीयरूपेण पुरुषेण देवा द्योतनशीलाः सृष्ट्युपक्रमशुद्धसत्त्वेन जाता यज्ञमतन्वत विस्तारयामासुः ॥ अस्य यज्ञात्मकपुरुषस्य वसन्तोपदिष्टः काल आज्य आज्यस्थानीयमासीत् । ग्रीष्मोपदिष्टः काल इध्मः इन्धनमासीत् । शरदुपदिष्टसंवत्सरावयवः हविर्हवनीयद्रव्यसमुदाय आसीत् ॥ ६ ॥

(१) अथ सप्तमी ।

सप्तास्यांऽऽसन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ ७ ॥

सप्त । अस्य । आसन् । परिधयः । त्रिः । सप्त । सम्ऽइधः । कृताः । देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥ ७ ॥

सायणभाष्यम् ।

अस्य साङ्कल्पिकस्य यज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधय आसन् । ऐष्टिकस्याऽऽहवनीयस्य त्रयः परिधय औत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः । अत एवाऽऽम्नायते— 'न पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाꣳस्यपहन्ति' इति । तत एत आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः । तथा समिधस्त्रिः सप्त त्रिगुणितसप्तसंख्याका एकविंशतिः कृताः । 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश' इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः। यद्यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपा यज्ञं तन्वाना मानसं यज्ञं कुर्वाणाः पशुमबध्नन्विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वत्र यत्पुरुषेण हविषेत्युक्तम् ॥ ७ ॥

मङ्गलभाष्यम् ।

सप्तास्यासन्परिधय इति । सप्तसप्त संख्याकानि महदहङ्कृतिपञ्चतन्मात्राणि शब्दानि अस्य यज्ञेश्वरस्य परितो धीयत इति परिधिः परिधानं ते परिधयः आवरणवसनस्थानीयाः समिधो यथा दक्षिणोत्तरयोस्तिस्रः तिस्रः प्रतीच्याश्चैका इत्थमासन् , सप्तसंख्या वा परिधिसंज्ञा । उत यद्वत् दुर्गस्य परिधयः खाता बभूवुस्तद्वद्रक्षोदुर्गमःयैत इति ज्ञेयम् ।

---

(१) अस्मिन्भाष्यचतुष्टयोपेतपुरुषसूक्तमुद्रणे कृष्णयजुःशाखानुसारिमंगलभाष्यस्य तैत्तिरीययजुःशाखाविशेषमंत्रव्यापकव्याख्यारूपत्वेन मुख्यतया गृहीतत्वादाश्वलायनमंत्रपाठानुक्रम एव मुख्यो गृहीत इति । तैत्तिरीयायामग्रतं यज्ञमिति मंत्रो बोध्यः ।

मङ्गलभाष्यम् ।

त्रिः सप्त समिधः कृता इति । त्रिःसप्तकविंशतिसंख्याका दशेन्द्रियाणि ज्ञानकर्मात्मकानि मनसा सहैकादश पञ्च महाभूतानि गगनादीनि पञ्चासवः प्राणापानादयश्च मिलित्वा तावत्यः समिध इन्धनानि कृता देवैरिति शेषः ।

'अथ यज्ञा अयूपा क्रतवः सयूपा'—इति लक्षणेन पुरुषपश्वालम्भनमनूद्य दर्शयति देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुमिति । देवाः पूर्वोदिताः ~~यज्ञम्~~ क्रतुं तन्वाना विस्तारयमाणा यजमानास्सन्तः पुरुषं पुरुषशब्दवाच्यं पशुमबध्नन् यूपस्तम्भे बबन्धुः । अनेनाज्यादिपश्वन्तं सम्भारजातं सर्वं पुरुषात्पृथग्रूपमित्यर्थः ॥ ७ ॥

महीधरभाष्यम् ।

यत् यदा देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वं पुरुषेण हविषेत्युक्तम् । तदा अस्य सङ्कल्पितस्य यज्ञस्य सप्त गायत्र्यादीनि छन्दांसि परिधयः आसन् ऐष्टिकस्याहवनीयस्य त्रयः परिधयः औत्तरवेदिकाः त्रयः आदित्यः सप्तमः परिधिः प्रतिनिधिरूपः । तथा च श्रुतिः— 'गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोतीति' तत एते आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः । त्रिःसप्त त्रिगुणाः सप्त एकविंशतिसंख्याकाः समिधः कृताः द्वादश मासाः पञ्चर्त्तवः त्रय इमे लोकाः असावादित्यः एते एकविंशतिरेकविंशतिदारुयुक्तेध्मत्वेन भाविताः ।

यद्वा सप्त समुद्राः क्षीरोदादयोऽस्य यज्ञस्य परिधयः आसन् । भारतखण्डे यांगा भवन्ति समुद्राणां परिधित्वम् । त्रिः त्रिगुणाः सप्त छन्दोवर्गाः समिधः कृताः गायत्र्यादीनि सप्त अतिजगत्यादीनि सप्त कृत्यादीनि सप्तेति ॥ ७ ॥

रामानुजभाष्यम् ।

प्रतिज्ञातत्वेनोपसंहृतिं दर्शयति—सप्तास्येति । अस्य कालावयवरूपमूर्त्तेर्विश्वरूपस्य सप्त परिधयः कुण्डोपरिभागे समं ततोऽवस्थिताः परिधय आसन् । यद्वा परिधयः सप्तावरणान्यासन् त्रिः सप्त समिधः कृताः एकविंशतिसंख्याकाः समिधः कृतास्तन्त्रोक्ता वेदितव्याः ॥

रामानुजभाष्यम्।

यद्वा प्रकृत्याद्येकविंशतितत्त्वानां ग्रहणम्। अथवा त्रिरिति पृथक्पदम् सप्तेति पृथक् तेन त्रिशब्दाच्चातुर्मास्यत्रिकस्य ग्रहणं सप्तेत्यनेनातिरात्राप्तोर्यमवाजपेयादिसप्तसंस्थानां ग्रहणम्।यद्वा त्रिरित्यनेनावस्थात्रयस्य ग्रहणं सप्तपदन्तु भूम्यादिमहत्तत्वपर्य्यन्तकार्यज्ञापकम्—

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे।
स्वाध्यायज्ञानयज्ञाश्च यतयः शंसितव्रताः॥

इतिश्रीमुखोक्तेः। देवाः पूर्वोक्तरूपाः यद्वैर्हवनीयसंभारैर्यज्ञं तन्वाना विस्तारयन्तः पुरुषरूपपशुमबध्नन् आलभनमकुर्वन्। यद्वा पुरुषशब्दो लौकिकपुरुषपरस्तथाच पुरुषमात्मात्मीयेषु ममतानिष्ठमनात्मभावरूपं अत एव पशुं पशुवद्वर्तमानं 'ज्ञानेन हीनाः पशुभिः समानाः' इत्यादिश्रुतेः तमेवाबध्नन् अनाशयन्निति।

द्व्यक्षरं तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम्॥

इति महाभारतोक्तेः। एवञ्च भूम्यादिमहत्तत्वपर्य्यन्तसामिग्रूपकार्यसंघाते पशुत्वरूपानात्मभावमबध्नन्नित्यर्थः॥ ७॥

अथ अष्टमी।

तं य॒ज्ञं ब॒र्हिषि॒ प्रौक्ष॒न्पुरु॑षं जा॒तम॑ग्र॒तः
तेन॑ दे॒वा अ॑यजन्त सा॒ध्या ऋष॑यश्च॒ ये॥ ८॥

तम्। य॒ज्ञम्। ब॒र्हिषि॑। प्र। औ॒क्ष॒न्। पुरु॑षम्। जा॒तम्। अ॒ग्र॒तः। तेन॑। दे॒वाः। अ॒य॒ज॒न्त॒। सा॒ध्याः। ऋष॑यः। च॒। ये॥ ८॥

सायणभाष्यम्।

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन्प्रोक्षितवन्तः। कीदृशमित्यत्राऽऽह—अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तम्—तस्माद्विराडजायत विराजो अधि पूरुष इति[५]। तेन पुरुषरूपेण पशुना देवा अयजन्त। मानसयागं निष्पादितवन्त इत्यर्थः। के ते देवा इत्यत्रा

सायणभाष्यम् ।

ऽऽह--साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयस्तदनुकूला ऋषयो मन्त्रद्रष्टारश्च ये सन्ति ते सर्वेऽप्ययजन्तेत्यर्थः ॥ ८ ॥

मङ्गलभाष्यम् ।

तेन पुरुषाख्यपशुना किमकुर्वत देवा इत्याकांक्षायामाह तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रत इति । तं पुरोदितं यज्ञं यज्ञेश्वरं प्रति बर्हिषि क्रतौ प्रौक्षन् अग्रतः सृष्टेः प्रथमतो जातं पुरुषं पुरुषलक्षणपशुं मन्त्रैः प्रोक्षितवन्तः विशसनाय मन्त्रपूतं कृतवन्त इत्यर्थः ।

ततः किमाचरन्नित्यत्र सर्वे देवतार्षिमुख्यास्तेन पुरुषपशुना यजनमकुर्वन् इत्याह तेन देवा अयजन्तेति । तेन पुरुषस्वरूपेण पशुना हूयमानेन हविषा देवा अयजन्त यजितवन्तः ।

तानेव विभज्य दर्शयति साध्या ऋषयश्च ये इति । साध्यास्तपसा साधितुं तद्रूपतां गन्तुं योग्यास्तेषामजादीनां मध्ये देवा देवशब्दवाच्यास्तपसा असाध्या एते तु साध्या इति भेदः ऋषयश्च मन्त्राधिकारिणो मन्त्रतुल्यत्वेन परमपावना ये चान्येऽर्वाग् देवादयस्ते सर्वे अयजन्निति पूर्वेणान्वयः ॥ ८ ॥

महीधरभाष्यम् ।

यज्ञसाधने यज्ञशब्दः, यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वमाभाव्य यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः प्रोक्षणादिभिः संस्कारैः संस्कृतवन्तः । कीदृशम्–अग्रतः सृष्टेः पूर्वं जातं पुरुषत्वेनोत्पन्नम् । एतच्च प्रागेवोक्तम्–'तस्माद्विराडजायत विराजो अधि पूरुषः' [५] इति । पुरुषरूपेण पशुना देवा अयजन्त मानसयागं निष्पादितवन्तः । के ते देवा इत्यत्राह—ये साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः ये च तदनुकूला ऋषयः मन्त्रद्रष्टारः ते सर्वेऽप्ययजन्त ॥ ८ ॥

रामानुजभाष्यम् ।

एवं मन्त्रत्रयेण यज्ञाङ्गभूताः संभाराः वेदाश्च प्रतिपादिता इदानीं कर्तव्यतारूपत्वमपि तस्यैव दर्शयन् यजनक्रमं निर्दिशति तं यज्ञमिति । तमेवाग्रतः प्रथमतो जातं कारणात्मना स्थितं यज्ञरूपपुरुषं बर्हिषि कुशेषु प्रधानदेवतारूपेण प्रौक्षन् अभ्यसेचयन्निति । तेन यज्ञाङ्गहवनीयसंभाररूपेण हविरादिना देवा अयजन्त यजनमकुर्वत तं इति भिन्नो-

रामानुजभाष्यम् ।

पक्रमे तमेव तथा ये साध्या साध्यगणा देवास्तेऽयजन्त तदनन्तरं तमेव तथा ये च ऋषय ऋषिगणास्तेऽप्ययजन्नित्यर्थः ॥ ८ ॥

अथ नवमी ।

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् ।
पशूंस्तांश्चक्रे वायव्यानारण्या(१)न्ग्राम्याश्च ये ॥९॥

तस्मात् । यज्ञात् । सर्वऽहुतः । सम्ऽभृतम् । पृषत् । आज्यम् । पशून् । तान् । चक्रे । वायव्यान् । आरण्यान् । ग्राम्याः । च । ये ॥ ९ ॥

सायणभाष्यम् ।

सर्वहुतः-सर्वात्मकः पुरुषो यस्मिन्यज्ञे हूयते सोऽयं सर्वहुत् । तादृशात्तस्मात्पूर्वोक्तान्मानसाद्यज्ञात्पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितम् । दधि चाऽऽज्यं चेत्येवमादि भोग्यजातं संपादितमित्यर्थः । तथा वायव्यान्वायुदेवताकांस्तांल्लोकप्रसिद्धानारण्यान्पशूंश्चक्रे उत्पादितवान् । आरण्या हरिणादयः तथा ये च ग्राम्या गवादयस्तानपि चक्रे । पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते—'वायवः स्थेत्याह । वायुर्वा अन्तरिक्षस्याध्यक्षाः । अन्तरिक्षदेवत्याः खलु वै पशवः । वायव एवैनान्परिददाति' इति ॥ ९ ॥

मङ्गलभाष्यम् ।

ततः किं बभूवेत्यग्रेज्यमानयज्ञपुरुषात्परमेश्वरात् यद्यज्जातं तत्तदाह तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यमिति । तस्मादिज्यमानात्सर्वं संभारभूतं जङ्गमाजङ्गमजात हुतं करोति इति सर्वहुत् तस्माद्यज्ञाद्यज्ञपुरुषात्परमेश्वरात् । पृषदाज्यमिति । दधिघृतमिश्रं हविर्द्रव्यं इदं यज्ञे जातं तत् । पशूनामारण्यग्राम्यभेदेनोत्पत्तिमुदाहरति तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये इति । तान् तच्छब्देन पूर्वोक्तदधिघृतादिहविर्द्रव्यार्थे

(१)अत्र याजुषां नारण्या इति प्रथमान्तः पाठो बोध्यः।

मङ्गलभाष्यम् ।

भवान् वायव्यान् वायुदेवताकान् 'वायव्यं श्वेतमालभेत भूतिकाम' इति श्रुत्या श्वेतपशून्, उपलक्षणमेतत् वायुदेवताया एव सर्वजीवजीवनप्रवर्तनशीलत्वात्तदुपलक्षितसर्वदेवताकान्पशूनित्यर्थः । अरण्ये भवानारण्यान् । ये च ग्रामे भवा ग्राम्यास्तांश्च चक्रे कृतवान् सृष्टवान्यज्ञपुरुष इत्यर्थः ।

अत्र पृषदाज्यमिति वाक्यस्यार्थान्तरम् । कथं ? पृषादितिशब्दस्य पृषत इत्यारण्यपशुपलक्षणकहरिणत्वम्, अजानां समूह आज्यं ग्राम्यपशुपलक्षणार्थमिति च तयोर्द्वन्द्वैक्यं सम्भृतं सम्पादितं उत्पन्नमिति वा । तदेव स्फुटीकरोति–पशूंस्तांश्चक्र इति सम्बन्धोऽनुसन्धेयः । ननु सर्वेषां देवानां सतां वायव्यानिति वायोरेव श्रैष्ठ्यं किमुक्तं ? तत्र श्रुत्या वायोः परत्वमुपपादितं तदाह–'नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव ब्रह्मावादिषम्' इति ॥ ९ ॥

महीधरभाष्यम् ।

सर्वं हूयते यस्मिन् स सर्वहुत् तस्मात् पुरुषमेधाख्यात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं सम्भृतम् सम्पादितम् दध्याज्यादिभोग्यजातं सम्पादितमित्यर्थः । पुरुषेणेति शेषः । तथा स पुरुषः वायव्यान्वायुदेवताकान् तान् प्रसिद्धान् पशून् चक्रे उत्पादितवान्—'अन्तरिक्षदेवत्याः खलु वै पशव' इति श्रुतेः । अन्तरिक्षस्य च वायुदेवत्यत्वात्पशूनां वायुदेवत्वम् । तान् कान् ? ये चारण्याः अरण्ये भवाः हरिणादयः ये च ग्रामभवा गवाश्वादयस्तान् पशून् चक्रे ॥ ९ ॥

रामानुजभाष्यम् ।

पश्चाद्भूमिमथो पुरः इत्यनेन प्रकृत्यादिकार्यजातस्य तन्नियम्यत्वं तदात्मकत्वं तद्व्याप्यत्वं तदाधारत्वं चोक्तम्—'पुरुषो वै यज्ञ' इत्यादि श्रुतेः पुरुषस्यैव यज्ञस्वरूपत्वाद्यज्ञस्य च तदपृथक्त्वात्तत्स्वरूपप्रतिपादकत्वात्तदुपासनायां तत्प्राप्तौ च मुख्याङ्गत्वात्तस्यैव स्वरूपविज्ञानार्थं सर्वेषां प्रधानस्याङ्गानां समुदायेन तस्मादुद्भवं दर्शयन् तदभेदं निर्दिशति -तस्मादिति । तच्छब्दः पूर्वपरामर्शित्वेनानुसन्धेयः । सर्वहुत इति पुरुषविशेषणम्, सर्वं हूयतेऽस्मिन्निति सर्वहुत् तस्मात्सर्वहुतः इत्यनेन नानायज्ञमूर्तित्वेन सर्वस्यापि कार्यजातस्य तदायत्तस्वरूपस्थितिप्रवर्त्तकत्वेन तदीयसचाकत्वेन तदपृथक्त्वमुक्तम् ।

रामानुजभाष्यम् ।

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥

इत्यारभ्य—

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥

इत्यनेन भगवतैव नानायज्ञस्वरूपत्वेन सर्वस्यापि यज्ञात्मकत्वेन च प्रतिपादितत्वात् । तथाच श्रीमद्भागवते ब्रह्मवाक्यं—

यदास्य नाभ्यान्नलिनादहमासं महात्मनः ।
नाविदं यज्ञसंभारान्पुरुषावयवादृते ॥ इति ।

यज्ञाद्यज्ञस्वरूपात्पृषदाज्यं सदध्याज्यं सम्भृतं घृतम् 'आज्य व दृवानामन्नम्' इत्याज्यस्यैव मुख्यत्वात्पूर्वनिर्देशः । यैश्च यज्ञः क्रियते तान्पशून् चक्रे । ते च के ? वायव्या वायुवत्तिर्य्यग्गामिनो मयूरशुकादयः नारण्या जलचरा मत्स्यादयः ये च ग्राम्या ग्रामवासिनोऽश्वादयः तानिति । चक्रे इत्यस्यात्मगामित्वात्सर्वोपि यज्ञः जिज्ञासूनां स्वस्वरूपजिज्ञासार्थं स्वप्राप्त्युपायीभूतात्मप्रसादार्थं च स्वकीयत्वेनाधत्त इत्यर्थः । ननु कथमुक्तं स्वरूपजिज्ञासार्थं तद्विज्ञानार्थं च सर्वं कृतवानिति ? नहि कार्यें दृष्टे कस्यचिज्जिज्ञासा तद्विज्ञानं च जायते, एवञ्च सर्वेषां कार्यदर्शनपरत्वात्सर्वविषयानुभवपरत्वाच्च सर्वोपि ज्ञानिनः स्युरिति चेत्, न । कार्ययथार्थज्ञानस्य तद्धेतुत्वान्नहि कार्याणां याथार्थ्यं केनचिज्ज्ञायते । याथार्थ्यं च–किं कार्यं किं कारणं किं चैतेषां प्रयोजनं कुत्र जायन्ते कुत्र विलीयन्ते काधारः कथमुद्भवन्ति कथं तिष्ठन्ति कश्चैतेषां सम्बन्ध इति । तच्च वेदाध्ययनपूर्वककर्माचरणेन विधिनिषेधोभयविधविवेचनपूर्वकयेन्मार्गावलम्बकत्वेन शिष्टोपदिष्टमार्गनिष्ठान्तःकरणे जायते नान्यत्रेत्यलं विस्तरेण ॥ ९ ॥

अथ दशमी ।

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥१०॥

तस्मात् । यज्ञात् । सर्वऽहुतः । ऋचः । सामानि । जज्ञिरे । छन्दांसि । जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥ १० ॥

सायणभाष्यम् ।

सर्वहुतस्तस्मात्पूर्वोक्ताद्यज्ञादृचः सामानि जज्ञिर उत्पन्नाः । तस्माद्यज्ञाच्छन्दांसि गायत्र्यादीनि जज्ञिरे । तस्माद्यजुरजायत ॥ १० ॥

मङ्गलभाष्यम् ।

पुनश्च किं जातं तदभिधत्ते तस्माद्यज्ञात्सर्वहुत इति । मन्त्रशेषो व्याख्यातः ।

ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्मादिति । ऋक् श्लोकबद्धरूपा आख्यायिकाप्रचुरा च । ता ऋचो जज्ञिरे उत्पन्ना बभूवुः । ऋचां हौत्रकर्मार्हत्वात्तत्र होता ऋग्वेद इत्यर्थः । साम्नामुद्गीथप्रचुरत्वात्सामानि सामवेदमन्त्रा औद्गात्रकर्मार्हा जज्ञिरे उद्गाता तत्र सामवेद इत्यर्थः । तथा च छन्दांसि—अनुष्टुप्त्रिष्टुप्जगतीपंक्तिरित्यादीनि तस्माद्यज्ञपुरुषात् जज्ञिरे जातानि वेदस्मृतिपुराणेतिहासशिक्षाकल्पादीनां छन्दोमयत्वात् ।

यजुस्तस्मादजायतेति । यजुः समग्रं यजनार्हमन्त्रकलितमाध्वरकर्मात्मकं जातावेकवचनम् यजूंषीति तस्माद्यज्ञपुरुषादजायत जातम् । अनेन स यजुर्वेदः स्वयं तत्राध्वर्युरभवदित्यर्थः । एतावता ऋक्सामयजुर्वेदास्त्रयो होतृद्गात्रध्वर्यव आसन् ऋत्विज इति भावः ॥ १० ॥

महीधरभाष्यम् ।

सर्वहुतः तस्माद्यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नानि । छन्दांसि गायत्र्यादीनि जज्ञिरे । तस्माद्यजुरप्यजायत । ऋग्यजुःसामभिश्छन्दोभिश्च विना यज्ञा न सिध्यन्ति ॥ १० ॥

रामानुजभाष्यम् ।

एवञ्च तस्य यज्ञस्वरूपत्वं यज्ञाङ्गत्वं च प्रतिपाद्य यज्ञाङ्गप्रतिपादकानां वेदानामपि तदभेदेनोत्पत्तिं दर्शयति तस्मादिति । तच्छब्दस्य पुनः पुनरावृत्त्या तत्तत्कार्यं प्रति पृथक्पृथगन्वयः । तस्माद्यज्ञात्सर्वहु-

रामानुजभाष्यम् ।

तः हवनीयसम्भारा जज्ञिरे। ऋच ऋग्वेदमन्त्राः सामानि सामवेदमन्त्राश्च जज्ञिरे। तस्माच्छन्दांसि गायत्र्यादीनि—

छन्दः पादौ शब्दशास्त्रं च वक्त्रं कल्पः पाणी ज्योतिषं चक्षुषी च।
शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं वेदस्याङ्गान्याहुरेतानि षड्वै ॥

इति बहुवचनेन पण्णामपि ग्रहणम्, पषामुपकारकतयाङ्गत्वम्। तथाहि-'गायत्र्या यजती'त्यादिविध्यर्थनिर्णये छन्द उपयुज्यते(१) व्याकरणं हि अर्थविशेषमाश्रित्य स्वरविशेषादीन् विदधत्पदार्थनिर्णये(२) कल्पसूत्राण्यपि प्रकरणान्तरपठितस्य न्यायलभ्यस्य शाखान्तराधीतस्य चाङ्गजातस्योपसंहारेण प्रयोगं दर्शयति(३) ज्यौतिषमपि स्वाध्यायोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति(४) शिक्षापि वर्णोच्चारणप्रयोगं दर्शयति(५) निरुक्तं तु व्याकरणस्यैव यदवशिष्टप्रायं बाहुलकादिसाध्याना लोपागमविकारादीनां प्रायस्तत्र तत्र संग्रहे उपयुज्यते (६)॥

यद्वा छन्द अनुष्टुप्त्रिष्टुबादिप्रतिपादनपरः १ शब्दः स्वरादिसमर्थप्रतिपादनपरः २ श्रौतस्मार्तप्रतिपादनपरः कल्पः ३ अध्ययनतदर्थानुष्ठानकालनिर्णयात्मकं ज्योतिःशास्त्रम् ४ वर्णनिर्णयात्मिका शिक्षा ५ अपूर्वार्थप्रतिपादकं निरुक्तम् ६ इत्यलं विस्तरेण। तस्मादेव यजुषां समूहोऽजायत जज्ञे इत्यर्थः ॥ १० ॥

## अथ एकादशी ।

**तस्मा॒दश्वा॑ अजायन्त॒ ये के चो॑भ॒याद॑तः ।**
**गावो॑ ह जज्ञिरे॒ तस्मा॒त्तस्मा॑ज्जा॒ता अ॑जा॒वयः॑ ॥ ११ ॥**

तस्मा॑त् । अश्वाः॑ । अ॒जा॒य॒न्त॒ । ये । के । च॒ । उ॒भ॒याद॑तः । गावः॑ । ह॒ । ज॒ज्ञि॒रे॒ । तस्मा॑त् । तस्मा॑त् । जा॒ताः । अ॒जा॒वयः॑ ॥ ११ ॥

सायणभाष्यम् ।

तस्मात्पूर्वोक्ताद्यज्ञादश्वा अजायन्तोत्पन्नाः । ये के चाश्वव्यतिरिक्ता गर्दभा अश्वतराश्चोभयादत ऊर्ध्वाधोभागयोर्दन्तयुक्ताः स-

सायणभाष्यम्।

न्ति तेऽप्यजायन्त। तथा तस्माद्यज्ञाद्गावश्च जज्ञिरे। किञ्च तस्माद्यज्ञादजा अवयश्च जाताः॥ ११॥

मङ्गलभाष्यम्।

अथ पूर्वं सामान्यतः पशूत्पत्तिमुक्त्वा विशेषतोऽश्वालम्भस्य क्रतूनामुत्तमत्वात्तदर्हाश्वोत्पत्तिपूर्वकगवाद्युदयमुपश्रुवति तस्मादश्वा अजायन्त ये के चोभयादत इति। तस्माद्यज्ञेश्वरादश्वाः—श्वानो न भवन्तीत्यश्वा इति व्युत्पत्तेर्लोके शुनामाकारतः किञ्चित्तत्साद्दश्यमुत्प्रेक्ष्यते यथा ग्रामसिंहा इतिवत् वाजिनोऽजायन्त जनिमन्तः। तल्लक्षणमनुवदति—ये के चाश्वाख्याः पशव उभयादत ऊर्ध्वाधो दशनानि येषान्ते तथोक्ता उभयदन्तसद्भावेन तृणमूलोत्खाटनकल्पा इत्यर्थः।

अथोर्ध्वदशनगोजनिरभिधीयते गावो ह जज्ञिरे तस्मादिति। तस्माद्यज्ञेश्वरात् गावः स्त्रीपुसंज्ञका धेनुबलीवर्दाः। हेत्याश्चर्ये हर्षे च। तेषां धेनुवृषभाणां क्षीरादिना कृष्यादिना लोकोपकारकत्वात् विशेषत ऊर्ध्वदशनविधुरत्वेपि पयोदधिघृतादिभिर्धेनूनां कृष्यादिप्रयासोत्पादितव्रीहिभिश्च वृषाणां यज्ञपुरुषोपयिकत्वादपि च गवालम्भस्य श्रुतिसिद्धत्वात् आश्चर्यविधायकत्वं हर्षसूचकत्वञ्च द्रष्टव्यम्।

तथा च तस्माज्जाता अजावय इति। तस्माद्यज्ञपुंसः अजाश्चावयश्च अजावयः पशवो जाताः आज्यादिना सामान्यतो लोकोपकारकत्वं विशेषतस्तेन सह तेषाञ्चापि ज्योतिष्टोमातिरात्राप्तोर्यामहाव्रतवाजपेयसर्वतोमुखादौ क्रतुकदम्बे हविरवदानैर्यज्ञेश्वरप्रीतत्वाच्चेत्यर्थः।

ननु पृषदाज्यादिमन्त्रैरारण्यग्राम्यपशूनुक्त्वा तस्माज्जाता अजावय इति पुनरुक्तेः को वाऽभिप्रायः? इत्यत्र पूर्वापरपशुसंज्ञायाः पंक्तेरनुक्रम उक्तः।

यद्वा धर्मधर्मिभावो द्रष्टव्यः। कथं? तत्पूर्वोक्तं दधिघृताज्यं पृषदाज्यं तेजो वै धर्मः संभृतं सम्यक् हुतं भक्षितं यज्ञपुंसेति। 'हृग्रहोर्भश्छन्दसीति' भकारः। अमी अजावयस्तद्वन्तः पयोदुघत्वात् एते धर्मिणो धर्मधर्मिणोरविनाभावसम्बन्धत्वादिति योजना॥ ११॥

महीधरभाष्यम्।

तस्माद्यज्ञात् अश्वाः अजायन्त उत्पन्नाः। तथा ये के चाश्वाति-

महीधरभाष्यम्।

रिक्ता गर्दभाद्योऽश्वतराश्च उभयादतः उभयोर्भागयोर्दन्ता येषां ते उभयादतः। छान्दसं दीर्घत्वम्, ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेप्यजायन्त। तथा ह-स्फुटं तस्माद्यज्ञात् गावः च जज्ञिरे। किञ्च तस्माद्यज्ञात् अजावयः अजाः अवयश्च जाताः। न हि पशुभिर्विना यज्ञः सिध्येत् ॥ ११ ॥

रामानुजभाष्यम्।

यद्यपि पशूनामुत्पत्तिः पूर्वं प्रतिपादिता तथापि मुख्ययज्ञाङ्गप-शून् विभागेन निर्दिशति तस्मादिति। ये पूर्वरूपशुत्वसामान्येनोक्तास्ते-ऽश्वा अजायन्त यच्छब्दस्य पूर्वदृष्टस्मारकत्वात्। ते च के? उभयादतः ऊर्ध्वाधोदन्तवन्तः छान्दसत्वात्पूर्वपदस्य दीर्घत्वं हेविस्फुटार्थे। तस्मा-द्गावो जज्ञिरे। तस्मादेव अजाश्च मेषाश्च जाता उत्पन्ना आर्षत्वाद्बहुर्थे छन्दः ॥ ११ ॥

अथ द्वादशी।

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य(१) कौ बाहू का ऊरू पादा उच्येते ॥१२॥

यत्। पुरुषम्। वि। अदधुः। कतिधा। वि। अकल्प-यन्। मुखम्। किम्। अस्य। कौ। बाहू इति। कौ। ऊरू इति। पादौ। उच्येते इति ॥ १२ ॥

सायणभाष्यम्।

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते-प्रजापतेः प्राणरूपा देवा यद्यदा पुरुषं विराड्रूपं व्यदधुः सङ्कल्पे-नोत्पादितवन्तस्तदानीं कतिधा कतिभिः प्रकारैर्व्यकल्पयन्विविधं कल्पितवन्तः। अस्य पुरुषस्य मुखं किमासीत्। कौ बाहू अभूताम्। का ऊरू, कौ च पादा उच्येते। प्रथमं सामान्यरूपः प्रश्नः; पश्चान्मु-खं किमित्यादिना विशेषविषयाः प्रश्नाः ॥ १२ ॥

(१) अत्र याजुषा किमस्यासीत्किं बाहू किमूरू इति पाठोऽनुसन्धेयः।

मङ्गलभाष्यम् ।

एतावन्मात्रेण पशुसर्जनेन नास्माकमलं चतुर्थवर्णोपेतस्य यज्ञादिकर्मकर्तृवर्गस्य वर्णत्रितयस्याभावात् अपि तु ब्राह्मणादिचातुर्वर्ण्यप्रजासृष्टिर्भवितव्येति मनसि निधाय पूर्वोक्ता देवाः साध्या ऋषयश्च तं सर्वकर्तारं यज्ञेश्वरं दध्युरित्याह यत्पुरुषं व्यदधुरिति । यः पुरुषः पशुजातमसृजत् तं 'पुरुषं व्यदधुः सन्दध्युः शुद्धबुध्या ध्यानमकुर्वन्नित्यर्थः'।

ध्यानप्रकारं श्रुतिः स्वयमेव विकल्प्य ब्रूते कतिधा व्यकल्पयन्निति । कतिधा कतिप्रकारैर्व्यकल्पयन् व्यचिन्तयन् ।

तदेव मुखादिपादान्तध्यानं स्फुटयति मुखं किमस्य कौ बाहू कावूरू पादा उच्येते कथ्येते ॥ १२ ॥

महीधरभाष्यम् ।

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवा यत् यदा पुरुषं व्यदधुः कालेनोदपादयन् तदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः । अस्य पुरुषस्य मुखं किमासीत् किं बाहू ऊरू चास्ताम् किञ्च पादौ उच्येते पादावपि किमास्तामित्यर्थः ॥ १२ ॥

रामानुजभाष्यम् ।

बहुशः पुरुषशब्देन प्रतिपादितस्य परब्रह्मणोऽवयवादिकथनाय पूर्वं प्रश्नमवतारयति यत्पुरुषमिति । यदित्यव्ययं द्वितीयार्थे यं पूर्वप्रतिपादितं पुरुषं कतिधा कतिप्रकारेण व्यदधुः विधानमकुर्वन् कतिप्रकारेण च व्यकल्पयन्कल्पनां कृतवन्तः । अस्य जगज्जन्मादिकारणभूतस्य भगवतो मुखं किमासीत्किमिति प्रश्नार्थेऽव्ययः नतु विशेषणपरम् किं बाहू आस्तां किमूरू आस्तां किं पादावास्तां उच्यते भाष्यते ॥ १२ ॥

## अथ त्रयोदशी ।

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥१३॥

ब्राह्मणः । अस्य । मुखम् । आसीत् । बाहू इति । राजन्यः । कृतः । ऊरू इति । तत् । अस्य । यत् । वैश्यः । पद्भ्याम् । शूद्रः । अजायत ॥ १३ ॥

सायणभाष्यम् ।

इदानीं पूर्वोक्तप्रश्नानामुत्तराणि दर्शयति—अस्य प्रजापतेर्ब्राह्मणो ब्राह्मणत्वजातिविशिष्टः पुरुषो मुखमासीन्मुखादुत्पन्न इत्यर्थः। योऽयं राजन्यः क्षत्रियत्वजातिविशिष्टः स बाहू कृतो बाहुत्वेन निष्पादितो बाहुभ्यामुत्पादित इत्यर्थः । तत्तदानीमस्य प्रजापतेर्यद्यावूरू तद्रूपो वैश्यः सम्पन्न ऊरुभ्यामुत्पादित इत्यर्थः । तथाऽस्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान्पुरुषोऽजायत । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे—'स मुखतस्त्रिवृतं निरमिमीत' इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परत्वेनैव योजनीये ॥ १३ ॥

मङ्गलभाष्यम् ।

चातुर्वर्ण्यप्रजोदयस्थानान्युपकल्प्य तदुद्भूतप्रजाचातुर्विध्यं दर्शयति–ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत इति ॥ ब्राह्मणः ब्रह्मवेदस्तन्मयत्वात् तस्य च वेदस्य तन्मुखोद्गतत्वात् तन्मुखस्यैव तद्रूपत्वमिति कृत्वा स एवास्य मुखमासीद भूत् 'यस्य निश्वसितमेतदृग्वेदो यजुर्वेदस्सामवेद' इत्यादिश्रुत्यन्तरप्रामाण्यात् । बाहू दोर्युगलं राजन्यः राजपुत्रः राज्ञां समूहो वा कृतः यत्कार्यं यत्कर्तृकं तत्तदेव भवति मृत्कर्तृकस्य घटस्य मृदेकरूपत्वात् बाहू इति, बाहुभ्यां राजन्यः कृतः सृष्ट इति योजना। यद्यः वैश्यः सोऽस्य पुरुषस्य ऊरू कथिताविति योजना । पद्भ्यामङ्घ्रिभ्यां शूद्रो अजायत अजनि । यजनादिषट्कर्माधिकारी ब्राह्मणः, याजनाध्यापनप्रतिग्रहानृते यजनादित्रितयधर्मवान् राजन्यो, वैश्यश्च उभयोः सहजकर्मणां पृथक्पृथक् उक्तत्वाच्चान्यत्र श्रुतिस्मृत्यादौ, शूद्रस्तु तदुक्तत्रैवर्ण्यसेवक इति दर्शनाद्विना सेवां न किञ्चित्कर्माधिकारस्तस्य। पुनः सर्वेषां वर्णानां ब्राह्मण एव गुरुर्मुखस्थानीयत्वात् बाहुस्थानीयो ब्राह्मणादिरक्षाकलशो यथा शरीरे यत्र कुत्रापि कण्डूत्यादिबाधापनो-

महीधरभाष्यम् ।

धाय बाहू नाम हस्तावेव प्रचरत इति लोकनिदर्शनात् ॥ १३ ॥

पूर्वोक्तप्रश्नोत्तराण्याह-ब्राह्मणः ब्रह्मत्वजातिविशिष्टः पुरुषोऽस्य प्रजापतेर्मुखमासीत् मुखादुत्पन्न इत्यर्थः। राजन्यः क्षत्रियत्वजातिविशिष्टो बाहू कृतः बाहुत्वेन निष्पादितः। तत् तदानीमस्य प्रजापतेः यत् ऊरू तद्रूपो वैश्यः सम्पन्नः य ऊरुभ्यामुत्पादित इत्यर्थः। तथास्य पद्भ्यां शूद्रत्वजातिमान् पुरुषोऽजायत उत्पन्नः ॥ १३ ॥

रामानुजभाष्यम् ।

एवं यज्ञस्य प्रधानाङ्गादि प्रतिपादितम्, तत्र केषां कर्तृत्वं केषां चात्राधिकार इति निर्णेतुं परब्रह्मणोऽवयवादिकथनेन वर्णानां यज्ञादिसहोत्पत्तिं दर्शयति। नहि सहोत्पत्तिमन्तराङ्गाङ्गिभावः संभवति। ननु विभिन्नतयावस्थितानां वेदर्षिहविरग्नियजमानर्त्विक्समिधादिपदार्थानां कथं सहोत्पत्तिमत्त्वमिति चेत्, इत्थं-सर्वपदार्थमात्रं प्रतीश्वरस्याभिन्ननिमित्तोपादानकारणत्वात्पदार्थजातस्य तदुत्पन्नत्वात्तस्य च यज्ञस्वरूपत्वात्पदार्थानां च यज्ञावयवत्वादिति, न ह्यवयवा अवयविनः पृथगवतिष्ठन्ति। नन्ववयवावयविभावेनेश्वरस्यानित्यत्वमिति चेन्न ईश्वरविग्रहाणां नित्यत्वात्, यदात्मको भगवांस्तदात्मिका व्यक्तिः। किमात्मकः? 'ज्ञानात्मकश्चैतन्यात्मक' इत्यादिश्रुतेः, अत्रापि पदार्थजातस्य विग्रहत्वेन प्रतिपादितत्वाच्च। ननु भवत्वीश्वरविग्रहभूतावयवानां नित्यत्वं पश्वाज्यसमिधादिपदार्थानां तन्न सम्भवति प्रत्यक्षेणैव बाधितत्वादिति चेन्न पदार्थास्तावद्द्विविधाः-कार्यावस्थापन्नाः कारणावस्थापन्नाश्च तत्र कार्यावस्थापन्ना अनित्याः कारणवस्थापन्ना नित्याः इति विवेकः।

पूर्वं प्रश्नत्वेन प्रतिज्ञातार्थमाह-ब्राह्मण इति ।अस्य सर्वनियन्तृत्वादिगुणविशिष्टस्य भगवतो ब्राह्मणो मुखमासीत् षष्ठ्यर्थस्य सम्बन्धार्थत्वात्तत्सम्बन्धस्य भगवदीयगुणत्वेन नित्यत्वात्सृष्टिकर्तृत्वादिकं प्रति नित्यत्वं द्योत्यते मुखस्य सर्वावयवश्रेष्ठत्वात्सर्ववर्णश्रेष्ठो ब्राह्मण आसीत्।

ॐतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥

रामानुजभाष्यम् ।

इति श्रीसुखोक्तेः । अस्यार्थः-ब्रह्मणस्त्रिविधो निर्देशः त्रयो विधा प्रकाराः स्कन्धरूपा यस्मिन्निति त्रिविधः निर्दिश्यते ज्ञाप्यतेऽनेनेति निर्देशः तदुपलब्धिकारणमित्यर्थः स्मृतः कथितः, उपनिषद्भिरिति शेषः । तेन निर्देशेन पुरा पूर्वं ब्राह्मणा वेदाश्च यज्ञाश्च विहिताः प्रजापतिना तत्तदधिकरणे नियुक्ताः । तथाच गीतायामेव—

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ इति ॥

तत्र ब्राह्मणादित्रयाणां ओमित्यादित्रिभिर्विशेषणैर्यथासंख्यमनुसन्धेयम् । यद्यपि ब्राह्मणोऽस्य मुखमासीदित्यादिपूपादानोपादेयभावोऽपेक्षितस्तथापि प्रकृतिविकृतित्वेन समानविभक्तिमत्त्वं बोध्यम्, अतएव च वैयधिकरण्यमपि न दोषः । बाहू राजन्यः क्षत्रियः कृतः । अस्येति सर्वत्राध्याहार्य्यम् ।अस्य यदूरू तद्वैश्यः कृत इति व्यत्ययेनान्वयः । यत्तच्छब्दौ निर्देशार्थकावव्ययौ । अस्य पद्भ्यां शूद्र अजायत । अत्रोपादानोपादेयभावस्तु तस्य द्विजत्वाभावद्योतनार्थः । 'यद्युह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रस्य समीपेनाध्येतव्यम् तस्माच्छूद्रो बहुपशुरयज्ञीय'इति श्रुतेः । स्मर्यते च-'अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदः धारणे शरीरभेद' इति-'संस्कारपरामर्शात्तदभावाभिलापाच्चेति' सूत्रात्,-

न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ।
शूद्रश्चतुर्थवर्णश्च एकजातिरितीष्यते ॥

इत्यादिस्मृतेः ॥ १३ ॥

## अथ चतुर्दशी ।

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत(१)॥१४॥

चन्द्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत । मुखात् । इन्द्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥ १४ ॥

(१) अत्र श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायतेति याजुषां पाठः ।

अथ पञ्चदशी ।

नाभ्या॑ आसीद॒न्तरि॑क्षं शी॒र्ष्णो द्यौः सम॑वर्तत ।
प॒द्भ्यां भूमि॒र्दिशः॒ श्रोत्रा॒त्तथा॑ लो॒काँ अ॑कल्पयन् ॥१५॥

नाभ्याः॑ आसी॑त् । अ॒न्तरि॑क्षम् । शी॒र्ष्णः । द्यौः । सम् । अ॒व॒र्त॒त । प॒त्ऽभ्याम् । भूमिः॑ । दिशः॑ । श्रोत्रा॑त् । तथा॑ । लो॒कान् । अ॒क॒ल्प॒य॒न् ॥ १५ ॥

सायणभाष्यम् ।

यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह—प्रजापतेर्मनसः सकाशाच्चन्द्रमा जातः । चक्षोश्चक्षुषः सूर्योऽप्यजायत । अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ । अस्य प्राणाद्वायुरजायत ॥ १४ ॥

यथा चन्द्रादीन्प्रजापतेर्मनःप्रभृतयोऽकल्पयंस्तथाऽन्तरिक्षादीँल्लोकान्प्रजापतेर्नाभ्यादयो देवा अवयवा अकल्पयन्नुत्पादितवन्तः । एतदेव दर्शयति—नाभ्याः प्रजापतेर्नाभेरन्तरिक्षमासीत् । शीर्ष्णः शिरसो द्यौः समवर्ततोत्पन्ना । अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना । अस्य श्रोत्राद्दिश उत्पन्नाः ॥ १५ ॥

मङ्गलभाष्यम् ।

एवं चातुर्वर्ण्यप्रजासृष्टिं कर्मकरणार्थमुक्त्वा विना तदिज्यदेवतातत्तद्धिष्ण्यसृष्टिं जगत्स्थितेरनुपयोगात्ताञ्च मनआदिद्वारा चन्द्रमा मनसो जात इत्यारभ्य लोकाँ अकल्पयन्नित्यन्तवाक्याष्टकेन प्रदर्शयति-चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णोद्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् इति । चन्द्रमाश्चन्दतीति चन्द्रः चदि आल्हादने चन्द्रा आल्हादरूपा मा लक्ष्मीः शोभा यस्य स तथाविधः, चन्द्रेण जगदाल्हादनाप्यायलक्षणेन मीयत इति वा चन्द्रमाः मनसोऽन्तःकरणभागात् अस्येत्यत्र च वक्ष्यमाणपर्यायेष्वपि योजनीयम् जातः अतो मनश्चन्द्रदैवत्यमिति प्रसिद्धिः । तस्य च रजनीपतित्वेन औषधिवनस्पतिपरिपालकत्वेन च द्विजराजत्वादपि विशेषता देवतापित्र्यरूप-

मङ्गलभाष्यम् ।

त्वाच्च जगदुपकारकत्वमुक्तं श्रुतिस्मृत्यादिभिः । तथाच तदुपपादक-श्रुतिः-'नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरति दीर्घमायुरिति' । तस्या अयमर्थः—जायमानः शुद्धप्रतिपदि सूक्ष्मत्वेनाविर्भूयमानो नवो नवो भवति नित्यनूतनत्वेन वर्धते । अत्रेयं शास्त्रप्रक्रिया-कृष्णपक्षेऽमापर्यन्तं या सुधाकला नित्यमेकैका एकैकस्यै देवतायै दीयते एवं दत्तास्ताः षोडशीः पुनः शुद्धप्रतिपदमारभ्य पूर्णिमापर्यन्तमेकैका एकैकया भुक्तभोगया देवतयाग्न्यादिप्रमुखपंक्त्या समर्प्यते ताभिस्तस्यां पूर्ण-षोडशकलावान्भवतीति कृत्वा पूर्णिमेति गीयते, अतः प्रतिशुक्ल-पक्षं नूतनत्वव्याजात् नवो नवो इति वीप्सा । इदन्तु लोकदृष्ट्या कलानामेव ह्रासो वृद्धिरिति मतेन । वस्तुतः स च कालत्रयेऽप्युपचयाप-चयशून्यः 'पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः' इति स्मरणात्साक्षाद्भगवद्विभूतिरिति । पुनश्चाह्नां सूर्यपृतनाभूतानां केतु-रिव केतुर्ध्वजः यद्वत्केतुनैव लोकेऽमुष्य यूथपस्य सेनेति निर्दिश्यते तद्वदह्नि चन्द्रदर्शनाच्चण्डभानुसेनानीकः शीतभानुः शीतभानुसे-नानीकश्चण्डभानुरित्यन्योन्यसम्बन्ध उभयचक्षुषोरिव परमेश्वरच-क्षुष्ट्वप्रसिद्धेः । 'यथा सूर्योऽग्नौ सायङ्काले स्वतेजः संस्थाप्य स्वयम-स्तङ्गच्छतीति' श्रवणात्, चन्द्रिकायामपि सत्यां रात्रौ दीपप्रदीप-करदीपिकादिभिर्व्यवहारदर्शनादत एव सूर्यज्योतिर्युक्तत्वेन रात्रावन-लस्यातीवतेजिष्ठत्वाच्च । किञ्च उषसां—

पञ्च पञ्च उषःकालः सप्तपञ्चारुणोदयः ।
अष्ट पञ्च भवेत्प्रातः शेषः सूर्योदयः स्मृतः ॥

इतिवचनात्सामान्यत उषआदीनामेकार्थकत्वात्तेषां सूर्योदयादीनां दिवसानामिति यावत् अग्रे पुरत एति गच्छति । यथात्र ज्योतिःशास्त्र-प्रक्रिया—दिवाकर एकैकराशावेकैकमासप्रचारी 'बुधशुक्ररविर्मासमि-ति' वचनात् सामान्यत एकैकनक्षत्रे किञ्चिदधिकसकलत्रयोदशदिना-नि निवसतीति । सुधाकरस्तु नित्यमेकैकनक्षत्रमनुभुंक्ते अभिजिन्नक्षत्रो-पेताष्टाविंशतिनक्षत्राणामश्विन्यादीनां दाक्षायणीनां निजपतित्वात् । एतावता सूर्यादपि चन्द्रस्याग्रगामित्वमुक्तम् । भागममृतान्धसः स्वस्यैकैककलामेकैकस्मिन् दिने एकैकस्यै देवतायै इत्थं देवेभ्योऽग्न्या-

मङ्गलभाष्यम् ।

दिभ्य उपलक्षिताग्निष्वात्तादिपितृभ्यश्च विदधाति प्रयच्छति । आयन् आगच्छन् दर्शे भानुमण्डलप्रविष्टत्वात्-'दर्शः सूर्येन्दुसङ्गम' इति वचनात् , ततः पुनरुत्थितः सन् प्रकर्षेण चन्दत्याह्लादयति चण्डकिरणसन्तप्तं चराचरं लोकं स्वस्यामृतरश्मिभिराप्याययति केवलामृतकलाभिर्लोकेशानिति च प्रचन्द्रमा भगवान् हिमांशुर्दीर्घं चिरमायुर्वयःकालम् इति यावत् चिरकालं तिरति स्थायीभवति 'यावदाचन्द्रतारकमिति' चिरकालस्थायित्वसूचकवचनात् ।

चक्षोश्चक्षुषः क्लीबस्य पुंस्त्वमार्षम्, सूर्यः-सुष्ठु ऊर्ध्वमाकाशे याति गच्छतीति तथाविधः—स्वोदयेनाहरहः सूयते सचराचरं जगदिति वा सूर्यः, अस्य च चक्षुरिन्द्रियाधिदैवत्वं यतो यो यत्सकाशादुत्पन्नः स तदधिदेवो भवति । तथाहि श्रुत्या सूर्यमहिमाऽनुवर्ण्यते— 'उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेदेति' । श्रुतेरर्थमाह-उद्यन्तमुदयं गच्छन्तम् अस्तं यन्तमस्तं गच्छन्तं आदित्यम्-अदितिर्देवमाता कश्यपपत्नी तदपत्यं पुमान् तथा तमभिध्यायन् अभितः सर्वं जगदात्मना सह तन्मयत्वेन ध्यायन् ध्यानं कुर्वन्, सामान्यतस्तद्बिम्बस्य यथाकथञ्चिद्दृश्यमानत्वेऽपि साक्षान्मण्डलवर्तिचित्सूर्यनारायणस्य चक्षुर्गोचरत्वासंभवात् 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण' इति वचनात्, कुर्वन् 'अहरहः संध्यामुपासीतेति' वाक्यैः संध्यावन्दनादिकर्म तदर्पणद्वारा आचरन् विद्वान् विहितानाचरणे प्रत्यवाय इति पुनश्चासावादित्यो ब्रह्म बृहदिति जानन् ज्ञानाभावे क्रियाया मोक्षफलत्वासंभवात् सकलं समग्रं भद्रं मङ्गलं निःश्रेयसलक्षणं सम्पूर्णशोभनमश्नुते प्राप्नोति । कथमाप्नोतु ? भेदाभेदप्रतीतिदर्शनात् । तदाह-ब्रह्मैव सन् ध्याता कर्ता च यः सः ब्रह्मैव ब्रह्मैकरूपः । वस्तुतो बुध्यादिसर्वदृश्यसाक्षितया स्थितः प्रत्यगात्मा ब्रह्म-'अयमात्मा ब्रह्मेति' महावाक्यश्रवणात् । एवकारस्तदनन्यत्वद्योतनार्थः । 'ब्रह्म वेद ब्रह्मैव भवतीति' श्रवणबलाज्ज्ञानाज्ञानयोरेव तद्भिन्नभिन्नत्वहेतुत्वम् । वस्तुगत्या विचार्यमाणे ब्रह्मैव सन् ब्रह्माप्येति भ्रान्तिजन्यं बुध्याद्युपाधिं मिथ्यादृष्ट्या निषिध्य ब्रह्म प्राप्नोति । प्राप्तिर्नामौपचारिकी स्वस्मिन् स्वयमेव भवति महाकाशे घटाकाश इवेति । य

मङ्गलभाष्यम् ।

एवं वेद स स एव नान्य इति फलितार्थः ।

मुखादिन्द्रश्चाग्निश्च—मुखाद्वदनादिन्द्रश्च शक्रः अग्निश्चोभौ जातौ । ननु मुखस्याग्निदेवताकत्वादग्न्युत्पत्तिरुपपन्ना इन्द्रोत्पत्तिस्त्वनुपपन्ना बाह्वधिकरणकत्वात्? सत्यं, इन्द्रशब्देन वरुणो गृह्यते इदि परमैश्वर्ये महदैश्वर्यवान् वरुणः रसनेन्द्रियाधिदैवत्वात् । यद्वा सर्वदेवतामुख्यत्वान्मुखोद्भूतत्वमिन्द्रस्याप्युपयुज्यते यथा सर्वावयवानां मुखप्राधान्यं तथा सर्वदेवानामिन्द्रप्राधान्यमिति । ननु 'अग्निरग्रे प्रथमो देवतानाम् अग्निर्मूर्धा दिव' इत्यादिभिरग्नेः सर्वदेवप्राथम्यस्योक्तत्वात् कथमिन्द्रस्य प्राथम्यमुक्तम्? तत्राग्निर्वै देवानामवम' इति मन्त्रेण सर्वदेवताकनीयस्त्वमग्नेः। समस्तसुरज्यैष्ठ्यमिन्द्रस्य सर्वचराचरप्रपञ्चाधिपत्यादित्यत्र श्रुतिः—'इन्द्रो यातोऽवसितस्य राजेति' । यातो जङ्गमस्यावसितस्य स्थावरस्य च राजा प्रभुरित्यभिप्रायोऽतो मुखसृष्टेरग्रत उक्तत्वात्स एव सर्वदेवतापूज्य इति ।

प्राणाद्वायुरजायतेति । प्राणात्—पञ्चवृत्तिकः प्राणः प्राणते समस्तसत्त्वानीति तथाविधः, जगज्जडदारुमयपुत्रिकाचालनखेलनाकुञ्चनप्रसारणक्रियायां पटुतरं प्राणसूत्रम्, तच्च तद्धारी च स्वयमेव परमेश्वरोऽभूदित्यत्र श्रुतयः—'को ह्येवान्यात् कः प्राण्यात् प्राणो ब्रह्मेति व्यजानात् प्राणे सर्वं प्रतिष्ठितमित्याद्याः'—शरीरान्तःसञ्चार्यसुस्तस्माद्वातीति वायुर्बहिर्वर्ती मातरिश्वा अजायत वायुदेवताकः प्राण इत्यर्थः । अत एव वायोः परत्वमुपदिशति श्रुतिः-'नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासीति' ॥ १३ ॥

अथ तद्वायुसंचारधिष्ण्यमनुवर्णयति—नाभ्या आसीदन्तरिक्षमिति । द्यावापृथिव्योरन्तर्मध्ये ईक्ष्यत इत्यन्तरिक्षमन्तरिक्षलोकः भूम्याकाशान्तरालस्थानमुभयलोकवासिनां विश्रामसद्म नाभ्या नाभिप्रदेशादासीत् अन्तरिक्षलोकस्य नाभिदैवत्यप्रसिद्धेः । अत्रायं भावः-प्राणापानयोर्हृदयगुदस्थानीयत्वादुभयोर्नाभिसमाख्यान्तरिक्षलोक एव साम्यावस्थापन्नत्वात् 'समानो नाभिसंस्थित' इति वचनात्, किञ्चोर्ध्वलोको हृदयस्थानीयः अधोलोको गुदस्थानीयस्तस्य चोर्ध्वलोकस्य 'हृत्पुण्डरीकं विरजं विशुद्ध' मिति श्रवणात् सकलदेवताधिष्ण्यत्वेन प्राणायनत्वेन च प्रकाशमानत्वात् द्युलोक इति प्रसिद्धिरधोलोकस्य पाय्विन्द्रिय-

मङ्गलभाष्यम्।

स्थानत्वात्तस्य च पायोर्मृत्युदैवत्यान्मर्त्यलोक इति प्रसिद्धिः। 'मर-माप'इत्यैतरेयश्रुत्याधोर्ध्वलोकौ मरमितिशब्देन मरणधर्मकत्वात् आप इति शब्देन 'आपो ज्योती रसोऽमृतमिति' सर्वव्यापित्वसर्वप्रकाशकत्वसर्वोत्कृष्टत्वमरणादिधर्मशून्यत्वेन च तावभिहिताविति द्रष्टव्यम्।

शीर्ष्णोद्यौः समवर्ततेति। शीर्ष्णो मूर्ध्नः द्यौर्ब्रह्मविष्णुरुद्रेन्द्रसूर्यानलनक्षत्रादिभिर्द्योतनात् द्युलोकः समवर्तत, समुत्पन्नो मूर्धा द्युलोकदैवत्य इत्यवगन्तव्यम्। तथाचोत्तमाङ्गस्य लोके ज्ञानेन्द्रियतद्देवतात्मकत्वेन सर्वशरीरप्रकाशकत्वात्।

पद्भ्यां भूमिर्दिशः श्रोत्रादिति। पद्भ्यां पादाभ्यां–भूमिर्भूर्लोकः समवर्ततेत्यनुषङ्गः यथा सर्वशरीरावयवानां पादाधारत्वं तथा समस्तलोकानां भूम्याधारत्वं जानीयात् पादेन्द्रियं भूमिदैवत्यं सिद्धम्। श्रोत्रात् श्रोत्रेन्द्रियात् दिग्देवता जाता इति पूर्ववद्योजनीयम्। श्रवणेन्द्रियस्य दिग्दैवत्यमिति द्रष्टव्यम्।

तथा लोकां अकल्पयन्निति। तथा पूर्वोक्तेन प्रकारेण लोकान् लोक्यन्त इति लोकास्तान्मुखादिभिश्चातुर्वर्ण्यप्रजा मनआदिभिश्चन्द्रादिदेवता नाभ्यादिभिरन्तरिक्षलोकांश्च ये सर्वे लोकशब्दवाच्यास्तान् सर्वानकल्पयन्। अकल्पयदिति लङ् प्रथमपुरुषैकवचने बहुवचनस्य छान्दसत्वान्न दोषः कल्पनामात्रत्वात्सर्वेषां पूर्वोक्तानाम्।

वस्तुतस्तु सत्यज्ञानानन्तलक्षणाद्ब्रह्मणोऽन्यन्न किञ्चनेत्यत्र तात्पर्यम् श्रुतिर्व्याचष्टे–'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेति'। तावदर्थं संक्षेपतो दर्शयति–एकं स्वगतभेदशून्यं यथा वृक्षस्य स्कन्धशाखापत्रपल्लवसुमनादिरिति स्वगतो भेदः। एवकारेण सजातीयभेदविधुरं वृक्षवद्वृक्षान्तरमिति सजातीयभेदः। अद्वितीयं विजातीयभेदरहितं वृक्षस्येवेतरः पाषाणादिरिति विजातीयभेदः। नेह–इह प्रत्यगभिन्ने ब्रह्मणि नानाजीव इति ईश्वर इति घट इति पट इति लोक इति तदभाव इति नानात्वशङ्का नास्ति आत्मनोऽन्यस्य भ्रान्त्या प्रतीयमानस्याऽपि तत्त्वतोत्यन्तासत्त्वान्मरुमरीचिकादिवदवबोध्यम्॥ १४॥

यद्वा ब्राह्मणादिचत्वारो वर्णाश्चन्द्रादिदेवताश्च लोकान् स्वस्वप्रजास्तन्तुरूपं अकल्पयन् सृष्टवन्तो बभूवुः। अनेन बहुवचनधातोः

सार्थक्यम् । अत्र च तथेत्यग्रत उक्तस्य पदस्यायमभिप्रायः–तथा यथा स्वोत्पत्तिक्रमस्तदनतिक्रम्येत्यर्थः। तच्च कथं ? मुखोद्भूतत्वादध्ययनादिमुखबलोपजीवी ब्राह्मणः बाहूदितत्वात्क्षत्रियस्य भुजबलोपजीवी क्षत्रियः ऊरुत्पन्नत्वाल्लाभार्थं गमागमार्यौर्वबलोपजीवी वणिक् पादोपसृष्टत्वात्त्रैवर्ण्यपादोपसेवनोपजीवी शूद्रश्च तस्मात्तादृशप्रजापरम्परामसृजन् ॥ १३ ॥

देवतासृष्टिरपि तथैव योजनीया । तच्च कथं ? सङ्कल्पविकल्पात्मकं मनो यथा तयोः सङ्कल्पविकल्पयोर्वृद्धिह्रासलक्षणत्वात्तथोपचयापचयधर्मकशुक्लकृष्णपक्षात्मकश्चन्द्रमाः पुनश्चतुर्दशकलाह्रासेन पञ्चदशमकलावशिष्टः स्वयं शोडषमः सन् सूर्येणैक्यं गच्छति यदा तदा अमासंज्ञारात्रिर्नक्षत्रादिसर्वप्रपञ्चोपरमेण महातमसि निद्राख्ये लोको निमज्जति यद्वत्तद्वत् सङ्कल्पविकल्पादिसङ्कलितनानाविधवृत्तीर्विषयेन्द्रियादिचतुर्दशसंज्ञिका अपहाय पञ्चदशमवृत्तिमत्केवलात्मावशेषं षोडशमं मन आत्मनि चित्सूर्ये एकतां याति यर्हि तर्हि सुषुप्तौ योगिसमाधौ वा न किञ्चित्प्रपञ्चप्रतीतिरवभातीत्येवं मनश्चन्द्रयोः समानधर्मता जनकजन्ययोरिव 'अस्य पुत्रः प्रतिरूपोऽजायतेति' श्रवणात् । चक्षोः सूर्योऽजायतेति । निमेषोन्मेषौ चक्षुषो धर्मौ अहनी उभे उदयास्तमयसंज्ञके सूर्यधर्मौ तयोरधिदैवाधिदैवत्ययोरितरेतरप्रकाशकप्रकाश्यत्वेप्येकरूपत्वात् यथा शरीरादिसङ्घातस्य चक्षुरेकप्रकाश्यत्वम् तथा भूरादिलोकत्रितयस्य सूर्यज्योतिरेकद्योत्यमानत्वं रात्रौ सूर्यव्यवहारादर्शनाच्चक्षुर्व्यवहारादर्शनम् एवं चक्षुःसूर्ययोः समानधर्मत्वं लोकेपि दृश्यत इति विवेकः । मुखं सर्वान्नाहुतिस्थानं यथा तथा विप्राग्न्योः सर्वहव्यकव्यामृतहोमपात्रत्वम्, यथा च सर्ववर्णानामिन्द्रा ब्राह्मणो गुरुत्वात्तथाऽखिलदेवतानामयमिन्द्रस्ततो विप्रशब्दवाच्य इन्द्र इति लोके विप्रानलतृप्त्या निखिलदेवतापितृभूतमनुष्योपलक्षितपरमेश्वरतृप्तिर्जायते 'विप्रः शुचिरग्निः शुचिरिति' श्रुत्या विप्राग्न्योर्मुखोद्भूतत्वाद्देवत्परमपावनाविति तौ द्रष्टव्यौ । प्राणवाय्वोरन्तर्बहिरग्निसहायत्वाद्यथा बहिः काष्ठाद्यग्निर्वायुनैव प्रज्वाल्यमानो दार्वादीन् प्रदहति नो चेच्छान्तिमृच्छति, तथान्तर्जठरानलोपि प्राणवायुना प्रदी-

मङ्गलभाष्यम्।

स्तो भुक्तान्नं षड्रससंज्ञं गीतोक्तचतुर्विधं वा पचति नोचेत्प्राणापानसञ्चारस्य किञ्चिन्न्यूनाधिकभावे मन्दाग्निसंज्ञो भूत्वा दीपनपाचनप्रतिबन्धाद्रोगोत्पत्तिर्जायत इति वैद्यशास्त्रप्रसिद्धेः। इत्थं प्राणवाय्वोः साम्यधर्मत्वं दर्शनीयम् ॥ १४ ॥

पिण्डाण्डब्रह्माण्डशरीरयोर्जीवेश्वरसंज्ञपरमेश्वराधिष्ठानत्वादल्पानल्पशरीरयोरूर्ध्वाधोभागमध्यवर्तिनाभ्यन्तरिक्षयोर्जीवात्मपरमात्मरेतःस्थानत्वाल्लोकेऽन्तरिक्षादापो दृश्यन्ते 'रेतस आप' इति श्रुत्या अपां रेतस्त्वनिर्देशात् प्रत्यक्षतो नाभेः रेतस्सद्मत्वमनुभवसिद्धम्। यतो ब्रह्मा परमात्मनो नारायणस्य नाभिकमले समुत्पद्य तन्मेढ्रस्य प्रजननस्थानत्वात्तदधिदेवतात्वमापन्नस्तस्य च मेढ्रस्य नाभितो रेतोनिःसरणद्वारत्वात्। अनेन नाभ्यन्तरिक्षौ समानधर्मौ वेदितव्यौ। शीर्षं द्यौश्च ते उभे उच्चमस्थाने प्रह्वाप्रकाशरूपत्वात्। चिच्छक्त्युपाधिकस्य परमेश्वरस्य प्रवेशनाय मूर्ध्नो ज्ञानद्वारत्वेन योगिनो मूलादारभ्य सहस्रारपर्यन्तं सुषुम्नाख्यसूक्ष्मनाड्या इडापिङ्गलयोर्मध्यमया विषयेभ्यः सकलेन्द्रियाणि मनःप्रभृतीनि प्रत्याहृत्य तैस्सह प्राणानुन्नीय शनैः शनैरभ्यासपाटवादितस्ततस्तस्मिन् सहस्रारे सप्तमचक्रे योगशास्त्रोक्ते 'अष्टचक्रा नवद्वारा' इति श्रुत्युक्तरीत्या त्वष्टमसंज्ञके ब्रह्मोपलब्धिस्थानत्वात्तस्मिंश्च शुद्धचिदेकरसे ब्रह्मणि प्राणादिसर्वं जगद्वासनामयं विलाप्य तदेकरूपो भूत्वा अद्वितीयब्रह्मानन्दामृतपानेन मृत्युलक्षणं कालव्यालभयं तृणीकुर्वन्ति। जीवन्मुक्ताः पुनः सद्योमुक्तिमिच्छन्तो महान्तस्तु ब्रह्मरन्ध्रं मूर्ध्नोर्ध्वभागं निर्भिद्य घटाकाशो महाकाश इव ब्रह्मैव भवन्तीत्यतः शीर्षदिवोश्च समानधर्मत्वं सिद्धम्। भूरादिपातालान्ता भूमिर्भूर्लोकः पादोद्भूतत्वात्पादसंज्ञः गङ्गादिपुण्यतीर्थजनकः सकलदेवर्षिब्रह्मर्षिराजर्षिवर्यपरमभागवतजनवन्दनस्थानम्। तथाच श्रुतिः—

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि।
तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम ॥ इति।

अस्यास्त्वयमभिप्रायः—चरणं भूमिसंज्ञं परमेश्वरस्यांघ्रिकमलं पवित्रं त्रिपथगादिपुण्यनदीजनिपात्रत्वात् त्रिलोकपावनं, विततं वि-

मङ्गलभाष्यम् ।

स्तृतं श्रीवराहवामनाद्यवतारेषु त्रिलोकव्याप्तत्वप्रसिद्धेः । अत एव पुराणं पुरापि नवं नित्यनूतनमिति यावत् । येन चरणेन पूर्वोक्तलक्षणलक्षितेन पुनः नित्यं चरणस्थानीयभूमिगतगङ्गागोदावर्यादिमहत्तरङ्गिण्यवगाहादिना पुनश्च तद्गतभूसुरभागवतजनवन्दनसमाराधनपादावनेजनादिना पवित्रीकृतः सन् दुष्कृतानि इतःपूर्वानन्तजन्मसंचितानि दुःखेन कृतानि दुष्कृतानि महापातकोपपातकानीति यावत् तरत्यतिक्रामति जनः । अत एव तेन पवित्रेण महापातकिनामपि पावनेन शुद्धेन स्वयं निर्मलेन यत्किञ्चित्कलिकल्मषलेपाभावात् चरणेन तद्वन्दनकीर्तनसेवनादिनवविधभक्त्योपलक्षणाच्च पूताः पवित्रीकृताः सन्तः अतिशयेन पापानि यस्मिन् सोऽतिपाप्मा तमन्योन्याध्यासलक्षणमरातिं शत्रुमविद्याकामकर्मात्मकसंसाराख्यं मृत्युं तरेम उत्तीर्णा भवेम वयं भगवच्चरणसेविनो जना इति द्रष्टव्यम् । अनेन पादभूम्योः समानधर्मत्वं वेद्यम् । दिक्श्रोत्रयोर्जन्यजनकत्वाद्यत्र कुत्रापि सन्निकर्षे दूरे वा कुड्यान्तर्गतशब्दोऽपि दिशो गुणः श्रवणेन्द्रियेण संगृह्यते यथा कर्णौ द्वौ दक्षिणोत्तरसंज्ञौ पितृदेवयानमार्गावभिहितौ 'पितृहूर्दक्षिणः कर्णो देवहूरुत्तरः स्मृत' इति वचनात् तथा दिशोपि चतस्रस्तासां द्वे दक्षिणपश्चिमे पितृयानसंज्ञे पूर्वोत्तरे द्वे देवयानसंज्ञे तथा चात्र श्रुतिः-'प्राचीनमुदीचीनं मेध्यं प्रतीचीनं दक्षिणममेध्यामिति'। ननु दक्षिणाप्रतीच्योर्दिशोरमेध्यत्वकथनात् कथं दक्षिणकर्णस्य दिक्साम्येनोक्तस्य गुरूपदेशयोग्यत्वमुच्यते ? इत्याशंकायां प्राप्तायां—सत्यम् दक्षिणप्रतीच्योस्तदाभिमुख्येन स्नानाचमनादिसर्वकर्मानर्हत्वादुक्तममेध्यमिति । तथा दक्षिणोत्तरकर्णयोर्जीवेश्वरप्रस्थानत्वादादौ जीवात्मनोऽनाद्यविद्यावासनामयजीवत्वोपाधिशोधनाय गुरूपदेशः प्रशस्तः शोधिते तु जीवोपाधौ शुद्धो जीवः परमात्मावशेषो भवति नात्र किञ्चिद्वैरूप्यं शङ्कनीयम् ॥ १५ ॥

महीधरभाष्यम् ।

यथा दध्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह—मनसः सकाशात् चन्द्रमाः जातः । चक्षोः चक्षुषः सकाशात्सूर्यः अजायत । वायुः प्राणश्च श्रोत्रात्कर्णादजायत मुखा-

महीधरभाष्यम्।

दग्निरजायत ॥ १४ ॥

यथा प्रजापतेर्मनःप्रभृतयश्चन्द्रादीनकल्पयन् तथान्तरिक्षादिलोकानित्याह—नाभ्येति। प्रजापतेः नाभेः सकाशात् अन्तरिक्षमासीत्। शीर्ष्णः शिरसः द्यौः स्वर्गः समवर्ततोत्पन्नः। अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना। श्रोत्राद्दिशः उत्पन्नाः। तथा तेनोक्तेन विधिना लोकान् भूरादीन् प्रजापतेः सकाशादकल्पयन् कल्पितवन्तः। फलदानोत्सुकाः काला इति शेषः ॥ १५ ॥

रामानुजभाष्यम्।

इदानीमधिदेवादिक्रमप्रदर्शनार्थं यज्ञाङ्गभूतदेवानामपि तत एवोत्पत्तिं निर्दिशति चन्द्रमा इति। अत्र मन्त्रद्वयेऽप्यस्येति पदमध्याहरणीयम्। अस्य देवाधिदेवस्य वात्सल्यादिगुणार्णवस्य भगवतो मनसः सङ्कल्पाच्चन्द्रमा जात उत्पन्नः। अस्य चक्षोः चक्षुषः सकाशात्सूर्य अजायत जातः। अस्य श्रोत्राद्वायुर्जातः प्राणश्च जातः। पूर्वचकारो भिन्नार्थे द्वितीयचकारस्तु विशेषणविशेष्याभावनिरासार्थस्तेन प्राणस्यान्तश्चारित्वाद्वायोश्च बहिश्चारित्वात्पृथक्त्वेन निर्देशः। अस्य मुखादग्निरजायतेति स्पष्टम् ॥ १४ ॥

यज्ञस्योत्तमलोकप्रापकत्वं व्यञ्जयन् पुरुषस्यैवावयवेषु लोकसंस्थानक्रममाह नाभ्या इति। अस्य नाभितः अन्तरिक्षं द्यावा पृथिव्योरन्तरमासीत्। शीर्ष्णः शिरसः द्यौः स्वर्गलोकः समवर्तत जातः। पद्भ्यां भूमिः समवर्तत जाता। श्रोत्राद्दिशः आसन्। यथा तदवयवेषु त्रिलोककल्पनोक्ता तथाऽन्यानपि लोकान् चतुर्दशभुवनान्यकल्पयन् कल्पितवन्त इत्यर्थः ॥ १५ ॥

*वेदाहमेतं पुरुषं महान्तम्
आदित्यवर्णं तमसस्तु पारे।
सर्वाणि रूपाणि विचित्य धीरः
नामानि कृत्वाऽभिवदन्यदास्ते ॥ १ ॥

---

* वेदाहमेतमित्यादि विचन इत्यन्तमृग्द्वयं तैत्तिरीयपुरुषसूक्तेऽधिकं दृश्यते। अतस्तदत्र संगृहीतम्। एवमष्टादशर्चं तैत्तिरीयपुरुषसूक्तम्।

सायणभाष्यम् ।

यथोक्तविराट्पुरुषध्यानमत्र प्रतिपाद्यते । तत्र मन्त्रद्रष्टा स्वकीयं ध्यानानुभावं प्रकटयति—यद्यः पुरुषः सर्वाणि रूपाणि देवमनुष्यशरीराणि विचित्य विशेषेण निष्पाद्य नामानि च देवोऽयं मनुष्योऽयं पशुरयमित्यादीनि कृत्वाऽभिवदंस्तैर्नामभिरभितो व्यवहरन्नास्त एवं पुरुषं विराजं महान्तं सर्वगुणैरधिकमादित्यवर्णमादित्यवत्प्रकाशमानं वेदाहं जानामि ध्यानेन सर्वदाऽनुभवामीत्यर्थः । स पुरुषस्तमसः पार अज्ञानात्परस्ताद्वर्तते । अतो गुरुशास्त्ररहितैर्मूढैरनुभवितुमशक्य इत्यर्थः ॥ १ ॥

मङ्गलभाष्यम् ।

अथ सहस्रशीर्षादि तथा लोकां अकल्पयन्नित्यन्तवाक्यैः प्रतिपादितं पुरुषोत्तमं स्वयं वेदो वेद्मीति स्वस्य नामसार्थक्यं ब्रूते-वेदाहमेतं पुरुषं महान्तमिति । एतं पूर्वोक्तलक्षणं पुरुषं महान्तं महापुरुषं "महतो महीयान्" इतिश्रुत्यभिहितपरमपुरुषं ब्रह्मेत्यर्थः, अहं वेदः वेद जाने । वेदपुरुषस्य पुराणपुरुषहृदयान्मुखद्वारा समुद्भूत्वात्तत्तात्पर्यं स एव वेत्तीति—वेद—इति नामनिरुक्तिः । 'यद्धि मनसा ध्यायति तद्वाचा वदति' 'यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मा' इति च द्वे श्रुती । तयोरेकया वाग्रूपस्य वेदस्य तदभिप्रायद्योतकस्य मानसोद्भूतत्वं द्वितीयया वेदानुत्पाद्य स्वनाभिपद्मसमुद्भवाय तदधिकारिणे चतुर्मुखाय यथा लोके पिता पुत्रं सावित्रसंस्कारपुरस्सरेण वेदानध्यापयति तथा दत्तवानित्यर्थः ।

तद्भूम्नस्ताटस्थ्यलक्षणमहत्त्वमुपपाद्य स्वरूपलक्षणं चाब्रवीत्तदाह आदित्यवर्णं तमसस्तु पारे इति । तमसोऽन्धकारसंज्ञाया रात्रेः पारेऽन्त आदित्यवर्णस्तत्तुल्यस्तं पुरुषं वेदेति पूर्वेणान्वयः । तुशब्दोऽवधारणार्थः । ननु प्राकृतान्धकारान्ते सूर्योदयस्य सार्वजनीनप्रसिद्धेरस्यापि तत्तुल्यत्वञ्चेदयमपि जगदन्तःपाती स्यात् कुतस्तस्य वेदवेद्यत्वं महापुरुषत्वं स्वप्रकाशत्वं चेति चेन्न वर्णशब्दप्रयोगात्तस्य स्वयं ज्योतिष्ट्वं यथेष्टं साधयति तमसोऽविद्याऽज्ञानाऽजाऽव्यक्तप्रधानमायाशब्दवाच्याया आत्मानन्दाद्यावरणविक्षेपशक्तेर्गाढतमोन्धकाररूपनिशायास्तस्या एव पारशब्दसारस्याद्युक्तानन्तपारभक्जल-

मङ्गलभाष्यम् ।

धिसंज्ञायाः पारे परतीरे अत्यन्तान्त इति यावत् । आदित्यवर्ण इत्यनादित्यरूपो न भवति किन्तु इति तुशब्दः आदित्यस्य अदित्यां भवस्य प्रसिद्धस्य सूर्यस्य वर्णो रूपं तद्वद्वर्णो यस्य स तथोक्तः। यथा लोकचक्षुर्गोचरः प्रभाकरः प्राकृततमसोऽन्ते उदेति तथायमिति शाखाचन्द्रन्यायेन रूपनिरूपणम्, 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इतिश्रवणान्न केवलं सूर्यादेव वैलक्षण्यमपि तु चन्द्रतारकाविद्युदग्नयस्तत्र स्वयं ज्योतिषि परे ब्रह्मणि न किञ्चित्करा इति तादर्थ्यात्, नोचेद्वर्णशब्दस्य वैयर्थ्यं स्यात्। पुनश्च सर्वप्रकाश्यसाक्ष्यप्रपञ्चप्रकाशकाखण्डाचिदेकरसस्य परब्रह्मणस्तद्वत् दृश्यजडत्वापत्तिः प्रसज्येत 'यतस्तस्य भासा सर्वमिदं विभातीति, साक्षी चेता केवलो निर्गुण'श्चेति श्रुतेः।

यद्वा तमःशब्देन राहुग्रहः तदन्ते राहूपरागावसाने आदित्यवर्णः सूर्य इवाविद्याग्रहग्रहणान्ते जीवाख्यादित्यो ब्रह्मज्योति स्वरूपो भवति 'सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाहमस्मीति' श्रवणात्–अज्ञानान्यथाज्ञानतत्कार्याहंममेत्यादिसर्वोपद्रवशून्यः प्रज्ञानं शुद्धचैतन्यं तदेकरूपत्वात्प्रज्ञानघनः प्रत्यगात्मा अहङ्कारादिविकारविलक्षणोऽहं ब्रह्मैवास्मि परिपूर्णपरमानन्दचिद्रसाम्बुधिर्भवानीत्यनुभवसिद्धोऽर्थः समुपद्यते।

एवञ्चेत्तर्हि नामरूपकल्पनाया का गतिः, किं वा केनचिदन्येन जडस्वरूपेण पुंसा जगदिदं कल्पितम्? इत्याशंक्य स्वतश्चिदेकरसस्वरूपेण स्थितः स एव मायया नामरूपे व्यकल्पयदित्याह–सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वा अभिवदन् यदास्त इति । सर्वाणि देवतर्षिनरतिर्यगादीनि चराचराणीति यावत् विचित्य सङ्कल्प्य सङ्कल्पमात्रेणैव सर्वजगत्कर्तृत्वं तस्य न तु साधनान्तरायासवत्वं कुलालवत्–'स ईक्षत बहुस्यां प्रजायेय स ईक्षत लोकान् सृजा' इति च श्रवणात्। ईक्षणं नाम सङ्कल्पः तदेव साधनं नान्यदिति जानीयात्। ननु लोके तत्सृष्टेर्यत्किञ्चित्कार्यनिर्माणसाधनान्तरसापेक्ष्यात् आयासबाहुल्याच्च कथमेतदचिन्त्यसृष्टिर्विना साधनप्रयासाभ्यां सञ्जाघटीतीतीमामाशङ्कां धीरशब्दप्रयोगात्परिहरति—यतो

मङ्गलभाष्यम् ।

धीरोऽगाधबोधः धियं 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मेति' श्रुत्युक्तां चिच्छक्तिमात्मसत्तां राति ददाति जगत्कल्पनायै बहिः प्रकटयतीति तथाविधः स्वतन्त्रत्वात् । अस्तु नाम तस्य तथात्वं स तु नामरूपकल्पनां विधाय ततः किमकरोदित्यत्राह—नामानि कृत्वाभिवदन् यदास्त इति । नामानि ब्राह्मणादिचतुर्वर्णानामयं ब्राह्मणोऽयं राजन्योऽयं वैश्योऽयं शूद्र इति तथा देवानामयं चन्द्रोऽयं सूर्योऽयमिन्द्रोऽग्निरित्यादिनिखिलस्थावरजङ्गमसंज्ञानि नामान्यभिधानानि कृत्वाऽभिधायाभिवदन् स्वयं पिता पुत्रानिव तत्तन्नामभिरकल्पयन् यद्यः परः पुमानास्ते ॥ १ ॥

धाता पुरस्ताद्यमुदाजहार
शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति
नान्यः पन्था अयनाय विद्यते ॥ २ ॥

सायणभाष्यम् ।

धाता प्रजापतिर्यं विराट्पुरुषमुदाजहार ध्यातॄणामुपकारार्थं प्रख्यापितवान् । चतस्रः प्रदिशश्चतुर्दिक्षु वर्तिनः सर्वान्प्राणिनः प्रविद्वान्प्रकर्षेण जानन् शक्र इन्द्रश्च तदनुग्रहार्थं प्रख्यापितवान् । धातुरिन्द्रस्योपदेशात्तं विराट्पुरुषमेवमुक्तप्रकारेण विद्वान् साक्षात्कुर्वन्निहास्मिन्नेव जन्मन्यमृतो मरणरहितो भवति । यदा विराट्पुरुषोऽहमिति साक्षात्करोति तदानीं वर्तमानदेहस्य तत्प्रत्यक्षरूपत्वाभावादन्यमरणेनायमुपासको न म्रियते । अयनायामृतत्वप्राप्तयेऽन्यः पन्था यथोक्तविराट्पुरुषसाक्षात्कारमन्तरेणान्यो मार्गो न विद्यते । न हि कर्मसहस्रैरमृतत्वं संपादयितुं शक्यते—'न कर्मणा न प्रजया धनेन' इत्यादिशास्त्रात् ॥ २ ॥

मङ्गलभाष्यम् ।

ननु तस्य जगदाद्यस्य पुंसोऽस्तित्वं च को वेदार्वाचीनो ऽवरजन्मलयः पुमानित्यत्राह धाता पुरस्ताद्यमुदाजहारेति । सृष्टिं दधाति करोतीति धाता विधाता चतुर्मुख इति यावत् । पुरस्तात्पुरा सृष्टेः तन्नाभि

मङ्गलभाष्यम् ।

कमले समुद्भूय प्रपञ्चनिर्माणविधौ ज्ञानाभावाद्यं स्वजनकं परमगुरुं उदाजहारोदाहृतवान् । अत्रेदं तात्पर्यम्–साक्षात्तत्स्वरूपमपश्यन् उद्बुध्वंमनामरूपं भगवन्तं पाहि पाहीति प्रपन्नतयोक्तवान् यदा तदा तप तपेति वर्णद्वयं द्विवारं वियद्वाणीमयं श्रुत्वा स्वमानेन शतं समास्तप्त्वा परमेश्वरं प्रसाद्य तत्प्रसादेन भगवज्ज्ञानविज्ञानविद्यासमाधितेजओजस्सहोबलवीर्यसम्पन्नः सन् 'धाता यथापूर्वमकल्पयत्' इति श्रुत्यर्थं स्फुटीचकारेति पुराणप्रक्रिया ।

तदेव वक्ष्यमाणमन्त्रवाक्येन विशदीकरोति शक्रः प्रविद्वान् प्रदिशश्चतस्त्र इति । शतशः क्रतवो भविष्यन्ति यस्मात्स शक्रः ब्रह्मा भगवदनुग्रहात् प्रकर्षेण विश्वं यस्य स प्रविद्वान् सर्वज्ञ इत्यर्थः । चतस्रः प्राच्युदीचीदक्षिणाप्रतीचीः प्रदिशो मुख्या दिशः प्रविद्वान् समवगमन् चतसृषु दिक्षु पश्यन् चतुर्मुखो जातस्ततश्च मुखचतुष्टयात् ऋगादिवेदचतुष्कं जातं ततः सर्वं भगवन्महिमावभासं सचेतनाचेतनं जगत्सम्भूतम् । यत्तदोर्नित्यसम्बन्धात् य एवम्भूतपवित्रविचित्रचरित्रो महान् पुरुषस्तमेवं पूर्वोक्तप्रकारेण विद्वान् 'प्रज्ञानं ब्रह्म१ तत्त्वमसि२ अहं ब्रह्मास्मि३ अयमात्मा ब्रह्म४' इति चतुर्वेदगतमहावाक्यार्थपर्यालोचनया 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति' सद्गुरूपसदनद्वाराऽऽत्मसाक्षात्कारज्ञानवान् यतः पूर्वमेवानन्तजन्मार्जितसात्त्विकमहत्पुण्यपुञ्जपरिपाकवशात् साधनचतुष्टयसम्पन्नः पुमानिहास्मिन्नेव जन्मनि यतो भगवदुपासनयाऽसम्भावनाविपरीतभावनादिप्रतिबन्धराहित्येन जन्मान्तरव्यवधानाभावात् मृतो न भवतीत्यमृतो मुक्तो ब्रह्म प्राप्तो भवतीति यावत् । तद्दर्शनस्य मुक्तिफलत्वं श्रुतयो घुष्यन्ति–'तमेतं विदित्वाऽतिमृत्युमेति, ब्रह्म वेद ब्रह्मैव भवति, ब्रह्मविदाप्नोति परमिति च । यस्मिन् जन्मनि ज्ञानं भवति मुक्तसर्वकामत्वेन तस्मिन्नेव जन्मनि मुक्त इत्यत्र श्रुतिर्बृहदारण्यकी जगौ–

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ इति ।

इदमेव ब्रह्मज्ञानं मोक्षाय सुकरं वर्त्म नान्यदित्याह नान्यः पन्था अयनाय विद्यते इति । अयति नयति प्रापयति अमृतत्वं ब्रह्मेत्ययन

मङ्गलभाष्यम् ।

मोक्षस्तस्मै अन्यस्तद्दितरो योगयागादिलक्षणः पन्था मार्गो न विद्यते नोपयुज्यते ऐहिकामुष्मिकसंसारप्रदत्वात् । तर्हि यज्ञयागप्रशंसायाः पूर्वोक्ताया अकिञ्चित्करत्वं प्रसज्येत? नहि नहि तस्य यज्ञस्य परमेश्वरमहिमत्वात् पुनस्तस्य च चित्तशुद्धिकरत्वाद्विना तया ब्रह्मज्ञानासम्भवात् ॥ २ ॥

अथ षोडशी ।

यज्ञेन यज्ञमयजन्त देवास्तानि

धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानः *सचन्त

यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् । ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥ १६ ॥

सायणभाष्यम् ।

पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति—देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन सङ्कल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः । तस्मात्पूजनात्तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यान्यासन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाधका देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानस्तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति ॥ १६ ॥

इति श्रीमत्सायणाचार्यविरचितं सहस्रशीर्षेतिषोडशर्चसूक्तभाष्यम् ।

मङ्गलभाष्यम् ।

तं यज्ञं तदादि धर्माणि च 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्'इति भगवदुक्तानि प्रशंसति—यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्र-

* सचन्ते इति तैत्तिरीयपाठः ।

मङ्गलभाष्यम् ।

धमान्यासन्निति । देवा विधात्रादयो यज्ञेन सयूपायूपसंज्ञेन कर्मणा 'यज्ञ अयूपा क्रतवः सयूपाः' इति व्यवहारः यज्ञं यजनीयपरमपुरुषं अयजन्ताजुषन्त । अत एव तानि तदुपलक्षिततपोदानादीनि प्रथमान्यनादीन्यासन् आसुः ।

पुनस्तेषां यज्ञप्रमुखधर्माणां स्वर्गलोकसङ्ग्राहकत्वं द्योतयति-ते ह नाकं महिमानः सचन्त इति । हेत्यद्भुते ते पूर्वोदीरिता महिमानः परमेश्वरमाहात्म्यलक्षणा यज्ञादिपरमधर्मा इत्यर्थः, नाकं-अकं दुःखं जरामरणक्षुत्पिपासादिलक्षणं तन्न विद्यते यत्र तत्तथाविधं दिवं सचन्ते सश्चिन्वन्ति सम्पादयन्तीति यावत् ।

तथा च तत्रानन्दनिलये ये वसन्ति तान्महात्मनस्तेजीयसः प्रस्तौति-यत्र पूर्वे साध्यास्सन्ति देवा इति । यत्र स्वर्लोके पूर्वे सृष्टेः पुरोद्भूता अजविष्णुभवशक्राद्यास्तद्ब्रह्ममानसपुत्राः सनचतुष्टयसंज्ञा नैष्ठिकब्रह्मचारिणो महीयांसस्सनकसनन्दनसनत्कुमारसनत्सुजाता नारदादयश्च मरीच्यादिनवप्रजापतयश्च ततोऽप्यर्वाचीनास्साध्या देवा आजानजानकर्मदेवसंज्ञाः-सन्ति विद्यन्ते । अनेन सत्यादिसप्तोर्ध्वभुवनानां द्युलोकसंज्ञत्वं भूरादिपातालान्तसप्ताधोभुवनानां भूर्लोकसंज्ञत्वमेवं योज्यम् ॥ १६ ॥

इति मङ्गलाचार्यविरचितं षोडशर्चपुरुषसूक्तभाष्यम् ।

महीधरभाष्यम् ।

पूर्वंप्रपञ्चेनोक्तमर्थं सङ्क्षिप्याह—देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन सङ्कल्पेन यज्ञेन यज्ञं यज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः । तस्मात्पूजनात् तानि प्रसिद्धानि धर्म्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि भूतानि आसन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः उक्तः । अथोपासनतत्फलानुवादकभागार्थः सङ्गृह्यते । यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपाधिसाधकाः देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ह एव ते महिमानः तदुपासका महात्मानः सचन्त सचन्ते समवयन्ति प्राप्नुवन्ति । अडभावः आर्षः-सृष्टेः प्रवाहनित्यतां दर्शयति तदुक्तम्-'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति' ॥१६॥

इति महीधराचार्यकृतं पुरुषसूक्तभाष्यम् ।

रामानुजभाष्यम् ।

एवं स्वतन्त्रसत्ताकस्य सर्वनियन्तुः सर्वाधारस्य भगवतः कालदेवयज्ञादिसकलपदार्थजातं प्रति तादात्म्यं प्रतिपादितम् । तादात्म्यं तु-'भेदसहिष्णुरभेदस्तादात्म्यमिति' महाभाष्यकारोक्तेः। तथा चाचार्यचरणैरप्युक्तं-'सर्वं हि विज्ञानमतो यथार्थकम्। श्रुतिभ्यो निखिलस्य वस्तुनः ब्रह्मात्मकत्वादिति वेदविन्मतं, त्रिरूपतापि श्रुतिसूत्रसाधितेति'। ननु भेदस्य भावरूपत्वादभेदस्याभावरूपत्वात्कथं भेदाभेदयोरेकाधिकरण्यं घटते इति चेन्न 'नैषा मतिस्तर्केणापनेया,तर्काप्रतिष्ठानात्,अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्'इत्यादिश्रुतिसूत्रस्मृतिभ्यः शुष्कतर्कनिषेधात्, नहि युक्तिबलेन भेदाभेदप्रतिपादनं क्रियते किन्तु वेदस्यैवोभयविधानपरत्वात्। तथाहि'नित्यो नित्यानां चेतनश्चेतनानां, भेदव्यपदेशाच्चान्य' इत्यादिभेदपराणां 'सर्वं खल्विदं ब्रह्मे'त्याद्यभेदपराणां च षड्लिङ्गोपेतत्वसाम्यात् स्वार्थ एव प्रामाण्यं सुप्रसिद्धम्। तथाच केवलभेदाङ्गीकारे अभेदपराणामानर्थक्यं केवलाभेदाङ्गीकारे भेदपराणामानर्थक्यं च स्यादतस्तदर्थकान्येव सूत्राणि निर्णीतवान्भगवान्वेदव्यासः,-'अंशो नानात्वव्यपदेशात्,अन्यथा चापि दासकितवादित्वमधीयत एके, उभयव्यपदेशात्त्वहिकुण्डलवत्, शारीरश्चोभयेपि भेदेनैनमधीयत' इत्यादीनि। न हिभूतलमन्तरा घटो घटाभावश्चानुभूयते भूतलस्यैव घटघटाभावोभयज्ञापकत्वादित्यलम्, विस्तरस्त्वाकरेषु द्रष्टव्यः।

तस्यैव यज्ञफलरूपत्वमिति कथयन् स्तौति-यज्ञेनेति। सृष्ट्यादौ जाता देवा यज्ञेन साधनभूतेन यज्ञं परमात्मानमयजन्त यजनं कृतवन्तः। तानि प्रथमानि यजनानि धर्माण्यासन् धर्मशब्देन व्यवह्रियमाणान्यासन्निति,—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥
नायं लोकोस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ।
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥

रामानुजभाष्यम् ।

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।

इत्यादिश्रीमुखोक्तेः । हेति स्फुटार्थे महिमानः महात्मानस्ते देवास्तेन यज्ञेन नाकं स्वर्गलोकं सचन्त अध्यतिष्ठन्त । कोऽसौ लोकः? यत्र यस्मिल्लोके पूर्वे प्रजापतयः साध्याः साध्यगणा देवा इन्द्रादयः सन्ति वर्त्तन्त इत्यर्थः । यज्ञतारतम्येन लोकतारतम्यमपि बोध्यम्॥१६॥

इति षोडशर्चपुरुषसूक्तरामानुजभाष्यम् ।

इति भाष्यचतुष्टयोपेतं षोडशर्चपुरुषसूक्तं समाप्तम् ।



## अथोत्तरनारायणम् ।

अ॒द्भ्यः सम्भृ॑तः पृथि॒व्यै रसा॑च्च
वि॒श्वक॑र्म्मणः॒ सम॑वर्त्त॒ताग्रे॑ ।
तस्य॒ त्वष्टा॑ वि॒दध॑द्रू॒पमे॑ति
तन्मर्त्य॑स्य दे॒व॒त्व(१)मा॒जान॒मग्रे॑ ॥ १७ ॥

सायणभाष्यम् ।

उत्तरनारायणेनादित्यमुपतिष्ठते । षट् ऋचः उत्तरनारायणमन्त्राः । तत्राद्यास्तिस्रः त्रिष्टुभः । ततो द्वे अनुष्टुभौ । अन्त्या त्रिष्टुप् । उत्तरनारायणेनादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयादिति । श्रीनारायणदेवत्याः मन्त्राः आदित्योपस्थाने विनियुक्ताः । पूर्वकल्पान्तरीयेषु पुरुषमेधयज्ञादिभावमापन्नः परम्पराकोटिसञ्चारीति श्रूयते । यः अद्भ्यः उदकात्सकाशात् संभृतः पृथिव्यै पृथिव्याः सकाशाच्च संभृत इति । पृथिव्युदकग्रहणं पञ्चमहाभूतानामुपलक्षणम् । तदन्तरप्रतिपन्नेऽहनि स परिष्वक्तः प्रश्ननिरूपणाभ्यामध्याधिकारसिद्धत्वात् । अग्रे प्रथमं यः भूतपञ्चकात् संभृतः । भृञ्भरणे । पुण्यसंस्कारानुरञ्जितभूतपञ्चकपरिवेष्टित इत्यर्थः । एवं संभृतः सन् पश्चात् रसाच्च विश्वकर्मणः समवर्तत । रसो रागस्तस्माद्रसात् विश्वानि सर्वाणि कर्माणि यस्य सः विश्वकर्मा सविता तस्माद्विश्वकर्मणः रसात् सर्वजगत्कर्तुरीश्वरस्य रागात् ईश्वरेच्छया समवर्तत समभवत् । सूक्ष्मशरीरी अवस्थितस्य उत्पद्यमानः सूक्ष्मदेहस्य त्वष्टा श्रीभगवानादित्यः यत् रूपं विदधत् कालात्मकः सविता विशिष्टं रूपं कुर्वन् एति आगच्छति तन्मर्त्यस्य पूर्वं मनुष्यस्य सतः देवत्वं व्यत्ययः देवत्वेन आजानं जननं उत्पत्तिरेव तस्य जन्माभवदित्यादित्यः स्तूयते ॥ १७ ॥

मङ्गलभाष्यम् ।

सद्रत्थम्प्रभावभावितो लोकः कुत उत्पन्नः किं लोकतः पुरा सृष्टो वा देवस्तस्य रूपज्ञानवान् पुनस्तत्किमर्वाचीनं वा प्राचीनं सर्जनमित्याकांक्षायामाह—अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजानमग्रे इति—वाक्यचतुष्टय-

(१) तत्पुरुषस्य विश्वमिति पाठान्तरम् ।

मङ्गलभाष्यम् ।

स्यार्थं समर्थयति अद्भ्यः आप्नुवन्ति विश्वमित्यापो जगदाप्याययन्तीति वा 'आपो ज्योती रसोऽमृतम्' इतिश्रुतिप्रतिपादिता ज्योतीरसामृतात्मकास्ताभ्यः संभूतः सञ्जातः । यो यस्मात्कारणादुद्गात् स तद्धर्मवान् प्रसिद्धः अतोऽत्रापि प्रकाशानन्दसुधालक्षणान्यसाधारणानि आप्याय्यायने त्वपां साधारणानि धर्माणि च प्रदृश्यन्त इतिप्रसिद्धेस्तत्सम्भवमुक्त्वाऽनादित्वमुच्यते–पृथिव्यै–पृथिव्याः, षष्ठ्यर्थे चतुर्थी । रसाच्च रसायाः तदुपलक्षितसप्ताधोभुवनसंज्ञायाः, स्त्रीलिङ्गस्य पुंस्त्वञ्च छान्दसम् । विश्वं कर्म यस्य स विश्वकर्मा त्वष्टा ततोऽधि पूर्वं संभूत इति पूर्वेणान्वयः । पृथिवीरसे च लोकौ त्वष्टा देवश्चार्वाचीनदेवताग्रजस्तेभ्यः पुरस्तादुत्पन्नत्वात्पुरातनोऽयं लोक इत्यर्थः । तस्य त्वष्टा विदधद्रूपमेति । त्वष्टा प्रसिद्धस्तोषयति स्वीयशिल्पकर्मणेन्द्रादीनिति तथा तस्य लोकस्य विदधद्रूपं विधानलक्षणमेति जानाति अथ ज्ञाने तद्वत् लोकरचनायां चतुर इत्यर्थः । तत्पुरुषस्येति । तद्विश्वं नाकलोकरचनात्मकं पुरुषस्य पूर्वसिद्धस्य परमेश्वरस्य न जन्यत इत्यजनोऽज आद्यः पुरुषः स्वयं तस्य सम्बन्ध्याजानं स्वीयमित्यर्थः अग्रेऽग्रसरं भवति न त्वर्वाक्सृष्टमित्यर्थः ॥१७॥

महीधरभाष्यम् ।

'अद्भ्यः संभृत' इत्युत्तरनारायणेनादित्यमुपस्थायेति' (१।३।८।२।२०) षट्कण्डिका उत्तरनारायणम् । उपान्त्ये द्वे अनुष्टुभौ शेषास्त्रिष्टुभः आदित्यदेवत्याः । पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते–अद्भ्यः जलात् पृथिव्याः सकाशाच्च पृथिव्यपां ग्रहणं भूतपञ्चकोपलक्षकम् । भूतपञ्चकात् यो रसः संभृतः पुष्टः । तथा विश्वं कर्म यस्य तस्य विश्वकर्मणः कालस्य रसात्प्रीतेः यो रसोऽग्रे प्रथमं समवर्तत समभवत् । भूतपञ्चकस्य कालस्य च सर्वं प्रति कारणत्वात्पुरुषमेधयाजिनो लिङ्गशरीरे पञ्चभूतानि तुष्टानि कालश्च । ततस्तुष्टेभ्यः कश्चिद्रसविशेषफलरूप उत्तमजन्मप्रद उत्पन्न इत्यर्थः । तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा आदित्यः एति प्रत्यहमुदयं करोति । अग्रे प्रथमं मर्त्यस्य मनुष्यस्य सतस्तस्य पुरुषमेधयाजिनः आजानदेवत्वं मुख्यं देवत्वं सूर्यरूपेण । द्विविधा देवाः–कर्मदेवा आजानदेवाश्च । कर्मणोत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः । सृष्ट्यादावुत्पन्ना आजानदेवाः

महीधरभाष्यम् ।

ते कर्मदेवेभ्यः श्रेष्ठाः 'ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दः' (बृह० मा० ४ । १ । ३५ ।) इति श्रुतेः सूर्यादय आजानदेवाः ॥ १७ ॥

रामानुजभाष्यम् ।

एवं पूर्वप्रकरणे त्वत्पदवाच्यस्य भगवतः सर्वलोकयज्ञवर्णादितादात्म्यकारणत्वादिप्रतिपादनेन स्वरूपं निर्दिष्टम् । अथ 'तस्माद्वा एतस्मादात्मनः आकाशःसंभूत आकाशाद्वायुर्वायोराप अद्भ्यः पृथिवी'-त्यादिश्रुत्युक्तभूतादिप्रतिपादनेन तत्त्वंपदयोः सामानाधिकरण्यं फलतः प्रतिपादयन् तत्प्राप्तिं निर्दिशति–अद्भ्य इति । अद्भ्य इत्यनेनानुक्तानामप्याकाशादीनां ग्रहणं बोध्यम् । अग्रे सृष्टेः पूर्वं विश्वकर्मणः विश्वं कर्म यस्याऽसौ विश्वकर्मेति तद्गुणसंविज्ञानो बहुव्रीहिः। तस्मादाप उत्पन्ना, अद्भ्यः पृथिव्यै पृथिव्युत्पत्त्यर्थं तत्कारणतया गन्धः संभृतः, ततः पृथिव्युत्पन्ना सोत्पन्ना सती समवर्त्तत नानाशरीरादिभेदेन परिणामं प्राप्तेत्यर्थः। रसाच्चेति विश्वकर्मपदस्य विशेषणम् ।कीदृशाद्विश्वकर्मणः? रसाद्रसरूपान्मोक्षरूपादिति 'रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवतीति' श्रुतेः। चकारोऽनुक्तसमुच्चयार्थः तेन 'त्रिवृत्तं त्रिवृत्तं करवाणीति'श्रुत्युक्तपञ्चीकरणत्वमपि बोध्यम्। तस्य तत्पदवाच्यस्य भगवतस्त्वष्टा सूर्यो रूपं व्यदधत् अडागमाभावस्त्वार्षः। ईश्वरस्य सर्वप्रकाशकत्वमेवात्मगुणः सूर्यस्याप्यधिदैवादिरूपेण सर्वप्रकाशकत्वसाम्यं दृष्टान्तस्यैकदेशवृत्तित्वात् । यस्तस्य रूपमेति प्राप्नोति तत्तदेव मर्त्यस्य मरणधर्मशरीरविशिष्टस्य त्वंपदवाच्यस्य जीवस्य अग्रे प्रथमतो देवत्वं द्योतनात्मकत्वं स्वस्वरूपत्वमेव आसमन्ताद्भावेन जातमित्यर्थः । नकारादेशस्त्वार्षः ॥ १७ ॥

वेदाहमेतम्पुरुषम्महान्त-
मादित्यवर्णन्तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥ १८ ॥

सायणभाष्यम् ।

एवं प्रतीयमानं पुरुषं पुरि शेत इति पुरुषः तम् । अनेन प्राप्तं परिच्छेदं व्यावर्तयति–महान्तमिति । महान्तमपरिच्छिन्नमनन्तम् । आदित्यवर्णं–आदित्यस्य वर्ण इव वर्णो यस्य स आदित्यवर्णः स्वयं प्रकाश इत्यर्थः । तमसः परस्तात् अज्ञानाकाराद्रुपरि स्वतेजसा अज्ञानान्धकारमधःकृत्य वर्तमानमेतं महान्तमादित्यान्तस्थं पूर्णं पुरुषमेनं साक्षादपरोक्षभूतं, अहं–शोधितत्वंपदार्थोऽहं वेद जानामि । एतं पुरुषं महान्तमादित्यवर्णपुरुषं वेदादित्यवर्णं महान्तं पुरुषमेतं पुरुषं वेदावेदेत्येवंव्यतिहारेणाहं वेद जानामि। सर्ववेदान्तैः तात्पर्येण प्रतिपाद्यार्थमाह–तमेव विदित्वाऽतिमृत्युमिति । सहस्रशीर्षेत्यादिना योऽभिहितः परमेश्वरः तमेव विदित्वा नान्यं तं विदित्वैव मृत्युं मृत्युयुक्तं संसारमत्येति अतिक्रामति न कर्मणा । अथ तमेव तं विदित्वैव मृत्युमत्येति मृत्युमतिक्रम्य एति स्वस्वरूपं प्राप्नोति परब्रह्म एति गच्छति इत्युपचारः । पक्षान्तरशंकां निरस्यति–नेति । अन्यः पन्थाः न विद्यते अयनाय गमनाय स्वरूपप्राप्तये ॥ १८ ॥

मङ्गलभाष्यम् ।

पुनश्च वेदपुरुषः परमेश्वरमहामहिमानुवर्णनतज्ज्ञानविज्ञानप्रभाभासमानत्वेन परमानन्दजलधिसमवगाहनात् स्वस्य तद्वेत्तृत्वमहोदयमाविष्कुर्वन् पूर्ववद्वाक्यचतुष्टयमर्थैक्येपि किञ्चिद्वर्णव्यत्यासेनाध्याकरोति ।

वेदाहमेतमित्यारभ्य नान्यः पन्था विद्यतेऽयनायेत्यन्तं व्याख्याततत्वात्सुगमम् ॥ १८ ॥

महीधरभाष्यम् ।

एतं महान्तं सर्वोत्कृष्टं पुरुषं सूर्यमण्डलस्थमहं वेद जानामीति ऋषेर्वचनम् । कीदृशम् ? आदित्यवर्णं–आदित्यस्येव वर्णो यस्य तम् उपमान्तराभावात्स्वोपमम् । तथा तमसः परस्ताद्दूरतरम् । तमोरहितमित्यर्थः । तमःशब्देनाविद्योच्यते । तमेवादित्यं विदित्वा ज्ञात्वा मृत्युमत्येति अतिक्रामति परं ब्रह्माधिगच्छति अयनायाश्रयायान्यः पन्था मार्गः न विद्यते । सूर्यमण्डलान्तःपुरुषमात्मरूपं ज्ञात्वैव मुक्तिः ॥ १८ ॥

रामानुजभाष्यम् ।

पूर्वोक्तसंक्षेपार्थं स्पष्टीकर्तुमहमर्थाश्रयतया त्वंपदार्थनिरूपणेनासिपदसामानाधिकरण्यप्रदर्शनाय तत्प्राप्तिं फलत्वेन प्रतिपादयन् ब्रह्मस्वरूपं निर्दिशति–वेदाहमिति । अहमित्यनेकवचनं जात्यभिप्रायेण अहमर्थरूपो जीवः–अहं जानामीच्छामि करोमीत्यादिप्रत्ययेभ्यः । ननु कथमहमर्थरूपत्वमात्मनः ? सुषुप्त्यादौ तत्प्रत्ययस्य व्यभिचारात्प्रकृतिकार्यरूप एवायमहं जानामीति प्रत्यय इति चेन्न सुषुप्त्यादावप्यहमर्थस्यावगमो मानसिद्धः । एतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषम् एतावन्तं कालं मूर्छित एवासमित्यादिप्रत्यभिज्ञाया एव मानत्वात् । एवं पुरुषं वेद एतमिति सार्वज्ञ्यादिगुणविशिष्टं सर्वनियन्तारं सर्वकारणकारणं सर्वप्रत्ययसाक्षिणं सर्वाचिन्त्यानन्तापरिमितज्ञानशक्त्यैश्वर्याश्रयं मुक्तोपसृप्यं मुमुक्षुध्येयं श्रीपुरुषोत्तममहं वेद ज्ञानविषयत्वेन साक्षात्करोमीत्यर्थः—'ज्ञानयज्ञेन चाप्यन्ये, ज्ञानवान्मां प्रपद्यते, ज्ञानी त्वात्मैव मे मत' इत्यादिभगवदुक्तेः। पुरुषं प्रकृतेः प्रवर्त्तकं–'मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति' श्रुतेः । महान्तमाकाशादीनामपि व्यापकं—'अणोरणीयान्महतो महीयान्, एष सर्वान्तरात्मा अन्तः प्रविष्टः शास्ता जनानाम् ,—

यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥

आत्मा हि परमः स्वतन्त्रोऽधिगुणः, तस्मिंल्लोकाश्रितास्सर्वे' इत्यादिश्रुतिभ्यः ।

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥

इत्यादिस्मृतेः । आदित्यवर्णं–आदित्यस्य वर्ण इव वर्णो यस्य त यथादित्यस्य सर्वप्रकाशकत्वं तथा पुरुषस्यापि प्रकृत्यादिसर्वकार्यप्रकाशकत्वमिति ज्ञेयम्। तमसः परस्तात् तमःशब्दवाच्यप्रकृतेः परस्तात्परं 'अक्षरं तमसि लीयत' इति वाक्ये प्रकृतिस्थाने तमःशब्दप्रयोगदर्शनात् ।

तमेव विदित्वेति। तमेव शास्त्रयोनिं परमात्मानं विदित्वा साक्षात्कारं कृत्वा। विदॢ लाभे इत्यस्य रूपम्। एवकारोऽन्ययोगव्यवच्छेदार्थः। अतिमृत्युं मोक्षं एति प्राप्नोति। न च वाक्यज्ञानमात्रादज्ञाननिवृत्तिलक्षणो

रामानुजभाष्यम्।

मोक्ष इति संभावनीयम्, अपितु तद्वाच्यसाक्षात्कारेणैव तत्र च ध्यानस्यैवान्तरङ्गत्वात्—'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुत्या वाक्यज्ञानानन्तरं मननाव्यवहितध्यानस्यैव स्पष्टमन्तरङ्गत्वविधानात्, अन्यथा रोगिणो भेषजश्रुतमात्रादेव तत्सेवनमृतेपि रोगनिवृत्तिप्रसंगात्। ननु नायं सर्पः किन्तु रज्जुरेषेति आप्तवाक्याद्भयनिवृत्तिदर्शनात्तथा प्रकृतेपि सङ्गच्छत इति चेन्न तत्रापि रज्जुस्वरूपसाक्षात्कारद्वारेणैव भ्रान्तिनिवृत्त्या भयनाशनिश्चयात् तथात्रापि श्रवणानन्तरवाक्यज्ञानावगतेपि तत्साक्षात्कारोपयिकासाधारणध्यानेन तद्दर्शने कृते उक्तलक्षणो मोक्षः। तथाहि—

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥
यदाऽपश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति॥

ब्रह्मविद्ब्रह्मैव भवति, ऋते ज्ञानान्न मुक्तिः, पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति, जुष्टं यदा पश्यत्यन्यमीशम्, भोक्ता भोग्यं प्रेरितारं च मत्वा निचाय्य तं मृत्युमुखात्प्रमुच्यते' इत्यादिश्रुतिकदम्बात्।

निरस्तातिशयाह्लादसुखभावैकलक्षणा।
भेषजं भगवत्प्राप्तिरेकान्तात्यान्तिकी मता॥

इति सर्वज्ञपराशरोक्तेः—

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥

इति श्रीमुखोक्तेः।

नान्यः पन्थाऽविद्यतेऽयनाय इति। अयनाय मोक्षमार्गाय ईश्वराराधनोत्पन्नज्ञानोपलब्धात्मसाक्षात्कारं विना अन्यः पन्था न विद्यते नास्तीत्यर्थः।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति॥

इति स्मृतेः॥ १८॥

प्रजापतिश्चरति गर्भे ऽअन्तर-
जायमानो बहुधा विजायते ।
(१)तस्य योनिम्परिपश्यन्ति धीरा-
स्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥ १९ ॥

सायणभाष्यम् ।

प्रकर्षेण जायन्त इति प्रजाः तासां पतिः गर्भे अन्तः सर्वप्राणिनामुदरमध्ये अन्तर्यामिरूपेण यश्चरति । स च स्वरूपेण अजायमानः देहादेर्जन्मन्यऽपि स्वयं जन्मशून्योऽपि उपाधिवशात् बहुधा बहुप्रकारेण विजायते । यद्वा अज गतिक्षेपणयोः । स्वमायया सर्वान् अजायमानः विक्षेपयन् संमोहयन् स्वयं बहुधा विजायत इति । तस्य बहुधा वर्तमानस्यापि प्रजापतेः योनिं स्थानं स्वरूपं च धीराः सम्यक् ज्ञानिनः परिपश्यन्ति साक्षात्कुर्वन्ति । तस्मिन् प्रजापतौ हि एव स्वकारणभूते एव विश्वा विश्वानि भुवनानि भूतानि तस्थुः तिष्ठन्ति ॥ १९ ॥

मङ्गलभाष्यम् ।

प्रजापतिश्चरति गर्भे अन्त इति । 'प्रजापतिः प्रजा असृजदिति' श्रुत्यन्तरात् प्रजानां मरीच्यादिचराचरान्तानां पतिर्ब्रह्मा गर्भे परमेश्वरकुक्षौ तन्नाभिकमले वा गर्भशब्दवाच्ये तत्राप्यन्तर्मध्यप्रदेशे चरति विहरति । अत्रायं भावः—महेश्वरमहाकायमध्यवर्तिनी नाभिस्तन्मध्यवर्ति कमलं तस्यापि गर्भस्तत्राप्यन्तर्मध्ये ब्रह्माण्डैकशरीरस्य ब्रह्मणः सञ्चारस्तर्हि तस्य भूम्नो महाकायपरिमाणं कोन्वर्वाचीनजनः कर्तुं शक्नुयात् यत्र ब्रह्माण्डाः परमाणवः स्युस्तत्र प्रजापतिनामाऽल्पादल्पतरः कथं कतम इति वा गण्य भावः । ननु यथाऽल्पशरीरवांस्तथैवानल्पशरीरवान् शरीरित्वेन साम्यात्कुतो वा तस्याजत्वमित्याशङ्कायां तन्नाभिपद्मसमुत्थब्रह्मदेवस्याप्यजत्वात् किं पुनस्तस्याजत्वे शङ्केति वक्तव्यम् । यतो मायोपाधिकत्वेन विश्वकायत्वाल्लोकवदयमपि शरीरीति शङ्का मास्त्वित्याशयेनाह—अजायमानो बहुधा विजायत इति । स प्रजापतिः जायते इति जायमानो न भवतीत्यजायमानः स्वयं जन्मरहितोऽपि सन् बहुधा 'बहुस्यां प्रजायेयेति' बहुभवनस्य सङ्कल्प-

(१) तस्य धीराः परिजानन्ति योनिमिति पाठान्तरम् ।

मङ्गलभाष्यम् ।

भात्रसिद्धेः बहुप्रकारेण जडाजडप्रपञ्चात्मना विजायते विविधतया भवति मायया 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपामिति' श्रुत्या मायागुणकार्यप्रजायाश्चित्रविचित्रत्वात् न वस्तुत इत्यर्थः ।

तर्हि तत्कारणज्ञानं केषामित्यत्राह तस्य धीराः परिजानन्ति योनिमिति । धीराः दृढासङ्गज्ञानशस्त्रसंछिन्नान्योन्याध्यासकृतसंसारतरुतन्मूलानाद्यविद्यावासनारूपकामाद्यरिषड्वर्गतया कालत्रयेऽप्यप्रमत्ता ब्रह्मविदस्तस्य मायिकत्वेन बहुधा जायमानस्याऽप्यजायमानस्य प्रजापतेर्योनिं जनिस्थानं परिजानन्ति परितः पूर्णत्वादद्वितीयत्वाच्च विदन्ति । ननु योनिशब्देन जन्यजनकत्वसम्बन्धाल्लोकवदस्यापि योनिसम्भवत्वे कोऽन्वयं विशेष ईश्वरस्य पुनश्च योनेः प्रकृतित्वेन जडत्वादित्याशंक्य तद्योनिलक्षणं परं ज्योतिष्ट्वेन प्रतिपादयति–मरीचीनां पदमिच्छन्ति वेधस इति । सृष्टिं विदधातीति वेधाः प्रजापतिस्तस्य योनिमिति पूर्वसम्बन्धः । मरीचीनां सूर्यादिज्योतिषां पद्यत इति पदं प्राप्यस्थानं दिवाकरादिभास्यभासकमित्यर्थः–'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरिति, तस्य भासा सर्वमिदं विभातीति' च श्रवणात् ।

यद्वा वेधसस्तपनस्थमरीचीनां रश्मीनां पदमधिष्ठानं–'सूर्यस्तस्मिष्ठन् यो यमयतीति' श्रवणात्,—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥

इति स्मरणाच्च, इच्छन्ति प्राप्तुमपेक्षन्ते धीरा इति पूर्वमुक्तत्वात् । ननु तत्पदस्य गायत्र्यास्तत्सवितुरित्यादि-धीमहीत्यन्तपादद्वयार्थत्वात्तेत्प्रासेरनुभववेद्यत्वादकाम्यत्वाच्च कथमिच्छन्तीत्युक्तं चेद्विदुषामिच्छा सामान्या न भवति, उपरताविद्याकामकर्मत्वान्नात्र कश्चिद्विरोधः शङ्कनीयः ॥ १९ ॥

महीधरभाष्यम् ।

यः सर्वात्मा प्रजापतिः अन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति । यथाऽजायमानोऽनुत्पद्यमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेणोत्पद्यते ।

महीधरभाष्यम् ।

धीराः ब्रह्मविदस्तस्य प्रजापतेः योनिं स्थानं स्वरूपं परिपश्यन्ति-'अहं ब्रह्मास्मि' इति जानन्ति । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन् ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि । सर्वं तदात्मकमेवेत्यर्थः ॥ १९ ॥

रामानुजभाष्यम्

इत्थ सर्वकारणत्वादिप्रतिपादनेन तदन्वितत्वेन तत्प्रवर्तकत्वेन चात्मोपलब्ध्यर्थं मुमुक्षूणां हिताय ब्रह्मस्वरूपं प्रतिपादितम् । इदानीं सर्ववेदार्थभूतगायत्र्यर्थं दर्शयन्स्तौति–प्रजापतिरिति । ब्रह्मण आविर्भूतः प्रजापतिर्हिरण्यगर्भः गर्भे अन्तराकाशे चरति स्वाविर्भावेन स्थितिं करोति–'हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्, आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत,ब्रह्मा देवानां प्रथमः सम्बभूव, विश्वस्य कर्त्ता भुवनस्य गोप्ता' इत्यादिश्रुतेः। अन्तरजायमानः तस्य परब्रह्मणो विभोरन्तर उत्पद्यमानः प्रजापतिः बहुधा बहुप्रकारेण विजायते जन्म वर्त्तमानस्य भूतार्थपरत्वात् ।

यद्वा प्रजाः पाति जीवनानुकूलेन रक्षतीति व्युत्पत्त्या परापररूपेण प्रणवः गर्भे उदराकाशे चरत्यनवच्छिन्नरूपेणाविर्भावं करोति । अन्तरजायमान उदराकाशे एव स्वाविर्भावं कुर्वाणो बहुधा पश्यन्त्यादिरूपेण बहुप्रकारको भूत्वा विजायते स्वोपलब्धिं कुरुते ।

तस्य योनिमिति । धीराः प्रयासबाहुल्येऽपि परिश्रमानपेक्ष्यमाणाः, यद्वा कृतात्मसाक्षात्काराः तस्य प्रजापतेः प्रणवस्य योनिं कारणं परिपश्यन्त्यनवच्छिन्नसुरसरित्प्रवाहवत्साक्षात्कुर्वन्तीत्यर्थः—'सर्वे वेदा यत्पदमामनन्ति, सर्वे वेदा यत्रैकीभवन्तीति' श्रुतेः, 'शास्त्रयोनित्वात्, ब्रह्मणो हि प्रतिष्ठाहमित्यादि' श्रीमुखोक्तेः। हेति स्फुटार्थे। तस्मिन्सर्वकारणकारणे विश्वाभुवनानि विश्वात्मकानि भुवनानि तस्थुः स्वाविर्भावतिरोभावादिनात्मस्थितिं चक्रुरिति—

'पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
मयि सर्वमिदं प्रोतं सर्वस्य चाहं हृदि सन्निविष्टः, इत्यादिभगवदुक्तेः ॥ १९ ॥

यो देवेभ्य ऽआतपति यो देवानाम्पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥

सायणभाष्यम् ।

देवेभ्यः अर्थाय आतपति आतपं करोति प्रकाशयति च प्रकाशते । यो देवानां पुरोहितः । यश्च देवानामग्रतः हितमाचरति । पूर्वो यो देवेभ्यः । यश्च देवेभ्यः पूर्वः सर्वदेवाग्रणीर्जातः । तस्मै ब्राह्मये रुचाय नमः । ब्रह्मणो योग्यं ब्राह्मं तस्मै ब्राह्मये रुचाय रोचमानाय दीप्यमानायादित्याय नमः ॥ २० ॥

मङ्गलभाष्यम् ।

अथ वेधसो माहात्म्यं लोकानां श्रावयितुं यच्छब्दपुरस्सरं निरुपयति—यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः नमो रुचाय ब्राह्मये ॥ यो वेधा ब्रह्मा देवेभ्य इन्द्रादिभ्यः आतपति प्रकाशते सर्वोत्कृष्टत्वात्सर्वोपास्यत्वाच्च 'ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्य' इति ब्रह्मविद्यासम्प्रदायकर्तॄणां ऋषिगुरूणां सर्वेषां ब्रह्मैकमूलत्वमुपदिदेश श्रुतिरिति विद्यात् ।

यश्च देवानामुक्तानां पुरोहित आचार्यः निगमागमोपदेष्टृत्वात् । यश्च देवेभ्यः पूर्वोऽग्रजः—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इति श्रवणात् परमेश्वरपूर्वसृष्टोऽयमाद्यो देव इत्यर्थः । यथा देवानामाद्यत्वमस्य ब्रह्मणस्तथा वेदानामग्र्यत्वमृग्वेदस्य तस्मात्तस्य च सर्ववेदात्मकत्वेपि मुख्यत्वेन तद्रूपत्वमुपपादयति नमःपुरस्कारेण—नमो रुचाय ब्राह्मय इति । ब्राह्मो ब्रह्मात्मकस्तस्मै ऋचां समूहो रुचश्छान्दसत्वात् तस्मै ऋग्वेदायेत्यर्थः नमः नमस्कारः । न-म इत्यस्य पदद्वयस्यार्थः—न विद्यते मो मम किञ्चित्स्वत्वावच्छिन्नं देहागेहादिकं इति तथा सर्वस्य देहादिसंघातस्य त्वन्मायिकत्वात् त्वदधीनं न किञ्चिन्मामकं मम तु त्वदेकरूपत्वादिति भावः ॥ २० ॥

महीधरभाष्यम् ।

यः प्रजापतिरादित्यरूपो देवेभ्योऽर्थायातपति द्योतते । यश्च देवानां पुरोहितः सर्वकार्येष्वग्रे नीतः । यश्च देवेभ्यः सकाशात् पूर्वः जातः प्रथममुत्पन्नः तस्मै आदित्याय नमः । कीदृशाय—रोचतेऽसौ रुचस्तस्मै दीप्यमानाय 'इगुपध'-पा० ३ । १ । १३५ इति कप्रत्ययः । तथा ब्रह्मणोऽपत्यं ब्राह्मिः । इञि टिलोपः । ब्रह्मावयवभूताय वा ॥२०॥

रामानुजभाष्यम् ।

इदानीं मुमुक्षूणां कृतार्थतां व्यञ्जयन्सर्वनियामकतया स्तौति-यो देवेभ्यो इति । यः स्वयंप्रकाशरूपः देवेभ्यः द्युतिमद्भ्यः ये सर्वकार्यजातमध्यात्माधिदैवादिरूपेण प्रकाशयन्ति तेभ्यः देवेभ्य आतपति स्वाभाविकात्मप्रकाशेन तान्प्रकाशवन्तः करोतीत्यर्थः-'एतस्याक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति, भीषास्माद्वातः पवते भीषोदेति सूर्य' इत्यादि श्रुतेः ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥

इतिस्मृतेः । यो देवानां पुरोहित इति । यश्च सर्वदेवाधिदेवः देवानां ब्रह्मेशेन्द्रादीनां पुरः अग्रे सृष्ट्युपक्रमे हितः आत्मज्ञानावरकात्मीयभावेन स्वस्वाधिकाराणां पारमेष्ठ्यादीनां प्रवर्त्तकः—

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

अस्य देवस्य मीढुषो दयाविष्णोरेव प्रवृद्धे हविर्भिर्विदेह रुद्रो रुद्रीयमहित्व" मिति बह्वृचः । 'सोऽब्रवीद्वरं वृणीष्व अहमेव पशूनामधिपतिरसानीति' श्रुतेः, मोक्षधर्मे --

ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः ।
वेददृष्टेन विधिना वैष्णवं क्रतुमारभन् ॥
प्रापुरादित्यवर्णं तं पुरुषं प्रकृतेः परम ।

इत्यारभ्य

येन यः कल्पितो भागः स तथा मामुपागतः ॥
प्रीतोहं प्रदिशाम्यद्य फलमावृतिलक्षणम् ।
युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः ॥
पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुमः ।
मया सृष्टः पुरा ब्रह्मा मद्यागमयजत्स्वयम् ॥
तत स्तस्य वरान्प्रीतो ददावहमनुत्तमान् ।
मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च ॥

रामानुजभाष्यम् ।

राजधर्मे च—

विश्वरूपो महादेवः सर्वमेधे महाक्रतौ ।
जुहाव सर्वभूतानि स्वयमात्मानमात्मना ॥

महादेवः सर्वयज्ञे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव ।
विश्वाँल्लोकान्व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान्कृत्तिवासाः ॥

ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् ।
प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत ॥ इति,

नारसिंहे च—

ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा ।
स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः ॥

इत्यादिस्मृतिभ्यः ।

पूर्वो यो देवेभ्यो जात इति । यः सर्वकारणरूपः देवेभ्यः कार्योत्पादकेभ्यः पूर्वो जात अनाद्यनन्तरूपेण स्थितः प्रधानमहत्तत्त्वाद्यपेक्षया पूर्वत्वं स्वतः पूर्वापरत्वाभावात्-'सदेव सौम्येदमग्र आसीत् न ब्रह्मा नेशानः, ब्रह्म वा इदमग्र आसीदात्मा वा इदमेक एवाग्र आसीत्, एको ह वै नारायण आसीन्नैव किञ्चनाग्र आसीत्, दिव्यो देव एको नारायणः, इत्यादि श्रुतेः,-विष्णुस्तदासीद्धरिरेव निष्कल'इत्यादिस्मृतेः तथा च श्वेताश्वतराणां सिद्धान्ते ब्रह्मवादिनो वदन्ति—

किं कारणं ब्रह्म कुतः स्म जाताः जीवाम केन क्वच संप्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु वर्त्तामहे ब्रह्मविदो व्यवस्थाम् ॥
कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिंत्यम् ।
संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः ॥
ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥

इति । अग्रेपि तत्रैव—

सकारणं कारणाधिपाधिपः न तस्य कश्चिज्जनिता न चाधिपः ।
तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ॥
'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुतिभ्यः,—
प्रधानपुरुषाव्यक्तकालानां परमं हि यत् ।
पश्यन्ति सूरयो नित्यं तद्विष्णोः परमं पदम् ॥

रामानुजभाष्यम् ।

इत्यादि स्मृतेः । नमो रुचाय ब्राह्मये इति । ब्रह्मात्मकीयाय रुचाय प्रकाशाय नमः नमस्कारं कुर्मः ।

यद्वा ब्रह्मणः स्वयं प्रकाशत्वात् तत्साक्षात्कारेऽन्यसाधनस्याभावान्नमः कृतार्थः स्म इत्यर्थः—

यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।

इत्यादिश्रीमुखोक्तेरिति ॥ २० ॥

रुचम्ब्राह्मञ्जनयन्तो देवा ऽअग्रे तदब्रुवन् ।

यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवा ऽअसन्वशे ॥२१॥

सायणभाष्यम् ।

रुचं रोचमानं ब्राह्मं ब्रह्मावयवभूतं जातावित्यनिटिलोपे च ब्राह्ममिति भवति । रुचं ब्राह्मं देदीप्यमानं ब्राह्मं ब्राह्मणजातिं त्वामेवं पूर्वोक्तप्रकारेण परं ब्रह्मैव ब्राह्मणजातिरिति यो ब्राह्मणो विद्यात् तस्य ब्राह्मणस्य वशे देवाः असन् अभवन् भवन्ति । परब्रह्मवशवर्तिनो देवाः तदंशभूतस्यापि वशवर्तिनो भवन्तीत्यर्थः ॥ २१ ॥

मङ्गलभाष्यम् ।

अतस्तस्य ऋग्वेदस्याद्यब्रह्मात्मकत्वाद्देवैरध्यधीतत्वमाह—रुचं ब्राह्मं जनयन्तः देवा अग्रे तदब्रुवन्निति । ब्राह्मं रुचं जनयन्तोऽध्ययनाधिकारित्वेन शिष्यपरम्परया वर्धयन्तः । यद्वा तत्र वेदे नानाशाखाभेदानुत्पादयन्तो देवास्तदुपलक्षितर्षयोऽपि अग्रे आदौ सृष्टेस्तदब्रुवन् स्वयमधीत्य तमधीतं वेदं पारम्पर्यायावान्त्रीनानध्यापयाञ्चक्रुः । अथ तद्वेदनस्य सर्वदेववशीकरणफलमाह—यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे इति । यस्तु ब्राह्मणो ब्रह्मवित् एवं पूर्वोक्तप्रकारेण विद्यात् जानीयात् तस्य ब्रह्मविदः देवा ब्रह्माद यो वशे असन् आसन् वशवर्तिनो भवन्तीत्यर्थः—'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्तीति' श्रवणात्, शमदमादिसाधनसम्पत्त्या तपोविद्यासमाधिभाजो ब्राह्मणस्य वासुदेवात्मकत्वेन सकलदेवतावासभूतत्वादित्यत्र स्मृतिरपि—

देवाधीनं जगत्सर्वं मन्त्राधीनन्तु देवतम् ।

तन्मन्त्रं ब्राह्मणाधीनं ब्राह्मणो मम देवतम् ॥ इति भगवदुक्तेः॥२१॥

महीधरभाष्यम् ।

देवाः दीप्यमानाः प्राणाः रुचं शोभनं ब्राह्मं ब्रह्मणोऽपत्यमादित्यं जनयन्तः उत्पादयन्त अग्रे प्रथमं तद्वचोऽब्रुवन्–'यः त्वा एवं ब्राह्मणः विद्यात् तस्य देवाः आसन् वशे'। रुचं देदीप्यमानं ब्राह्मं ब्रह्मण उत्पन्नं जनयन्तः सृष्ट्यर्थं देवा योगिनः तेजसा देदीप्यमानाः यत् अब्रुवन् यद्ब्रूयुः । अग्रे-प्रथमतः । किमूचुः ? अपरोऽपि यः ब्राह्मणः स ब्रह्म विद्यात् जानीयात् तस्य देवा असन् वशे सोऽपि सनकादीनां स्थानं गच्छतीत्यर्थः ॥ २१ ॥

रामानुजभाष्यम् ।

इदानीं मुमुक्षूणां श्रद्धामुत्पादयन् तत्प्राप्तेर्माहात्म्यं कथयति, रुचं ब्राह्ममिति । जनयन्तो देवाः सृष्ट्युपक्रमे भगवदीयानुभावेन कार्यमुत्पादयन्तो देवाः कृतात्मसाक्षात्काराः अग्रे सृष्ट्यादौ ब्राह्मं रुचं ब्रह्मात्मभूतं रुचं प्रकाशं स्वरूपमिति यावत् प्रसादाभिमुखं ज्ञात्वा तद्वक्ष्यमाणं वाक्यमब्रुवन् । किं तद्वाक्यमित्यपेक्षायामाह यस्त्वैवमिति । यः कृतात्मसाक्षात्कारः ब्राह्मणः त्वा त्वां देशकालवस्तुपरिच्छेदरहितं एवं यथार्थज्ञानेन विद्यात् ज्ञेयतया साक्षात्कुर्यात् तस्य ब्रह्मनिष्ठब्राह्मणस्य सर्वेऽपि देवा वशे तदाज्ञाप्रतिपादने असन् सन्तु अत्र लोडर्थे लङ् ।

यद्वा तस्य वशे असन् भविष्यन्तीति भविष्यत्काले भूतनिर्देशः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति श्रुतेः ।

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।

इत्यादिश्रीमुखोक्तेः । अत्रात्मसाक्षात्कारः प्रयोजनं परमात्मैव विषयः यज्ञानुष्ठानेन शुद्धान्तःकरणो जिज्ञासुरधिकारी प्रतिपाद्यप्रतिपादकभावः सम्बन्धः ॥ २१ ॥

माया नरीनर्ति यदीक्षणेन विश्वं वरीवर्ति स्वभासया विभुः ।
वाचामधीशं हि वरेण्यरूपं वन्दे सदा तं हयशीर्षकं हरिम् ॥१॥

स्वकीयकृपया येन परं तत्त्वमुदीरितम् ।
श्रीप्रियादाससंज्ञं वै नमामि सततं गुरुम् ॥ २ ॥

रामानुजभाष्यम् ।

माघे मास्यसिते पक्षे चतुर्थ्यां सूर्यवासरे ।
वेदेन्दुनन्दपृथ्व्यङ्के वत्सरे पूर्णतामगात् ॥३॥

इतिश्रीहयग्रीवानुग्रहीतकमलकृष्णशर्मकृता पुरुषसूक्तव्याख्या समाप्ता ।

श्रीश्च॑ ते लुक्ष्मीश्च॒ पत्न्या॑वहोरा॒त्रे
पा॒र्श्वे नक्ष॑त्राणि रू॒पम॒श्विनौ॒ व्यात्त॑म् ।
इ॒ष्णन्नि॑षाणा॒मुम्म॑ऽ इषाण
स॒र्व्वल्लो॒कम्म॑ऽ इषाण ॥२२॥

॥ इत्युत्तरनारायणम् ॥

सायणभाष्यम् ।

श्रीश्च लक्ष्मीश्च ते सवितुः तव पत्न्यौ । यया आश्रयणीयो भवति सा श्रीः । आदित्यः यया तु लक्ष्यते सा लक्ष्मीः । श्रीः शोभानुरूपा । लक्ष्मीः दीप्तिलक्षणचिद्रूपिणी । उभे ते पत्न्यौ भार्ये । ते के? अहोरात्रे पत्नीत्वेन कल्पिते पार्श्वे उभयपार्श्ववर्तिन्यौ ते । नक्षत्राणि अश्विन्यादीनि तव रूपं अश्विनौ द्यावापृथिव्यौ तव व्यात्तं मुख्यं मुखम् ।इत एवं रूपं त्वामिदमहं याचे । इष्णं निषाणामुं म इषाण–सर्वलोकं म इषाण । एतत्पदद्वयमपि इषुधातो रूपम् । विकरणव्यत्ययश्च । इष्णन् इच्छन् कर्मफलमिच्छन् । किन्तदिति ? अमुं म इषाण–अमुं लोकं मे मदीयत्वेन इषाण इच्छ, सर्वलोकं मे मदीयत्वेन इषाण इच्छ आत्मत्वेन वा इषाण, अहमेवेदं सर्वमिति सर्वात्मभावमेवेच्छेति । एवमादित्यः स्तूयते ॥ २२ ॥

इति सायणाचार्यविरचितमुत्तरनारायणभाष्यं समाप्तम् ।

मङ्गलभाष्यम् ।

पुनस्तस्य च पत्न्यादिसम्पदापि महिष्ठत्वमाम्नायते–हीश्च (१)लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे नक्षत्राणि रूपमिति । हीर्युक्तायुक्तविचारलक्षणा बुद्धिः

---

(१) पूर्वार्धे 'श्रीश्च' इत्यत्र मन्त्रे 'हीश्च' इति उत्तरार्धे तु इष्टं मनिषाण अमुं मनिषाण सर्वं मनिषाणेति पाठो मङ्गलाचार्यगृहीतो दृश्यते अत्रैव च रामानुजभाष्यसमाप्ते

मङ्गलभाष्यम् ।

लक्ष्मीः अणिमाद्यष्टैश्वर्यलक्षणा सम्पत् सा च सा च ते उभे पत्नीत्वेन गृहीते तद्वत्ते ह्रीलक्ष्म्यावुभे शक्ती स्वयं सेव्यमानेऽनपायित्वेन वर्तेत इत्यर्थः । तथाचाहोरात्रे पार्श्वे पार्श्ववर्तिनौ नाम ब्रह्मवित्सम्राड्मध्यपार्श्ववर्तितेजःसौम्याद्यखिलगुणसैन्यपरिपालकावित्यर्थः। नक्षत्राणि रूपं-नक्षत्राण्यश्विन्यादीनि ध्रुवान्तानि रूप्यन्त इति रूपं स्वरूपं तपोविद्याप्रभाभासमानत्वात् । अश्विनौ व्यात्तम्—अश्विनौ अश्विनीदेवते व्यात्तं स्वीकृतं घ्राणेन्द्रियग्राह्यमगुरुधूपपरिमलादि यस्येति सम्बन्धशेष उक्तसर्वपर्यायेषु योजितव्यः ।

यद्वा विहरन्त्यस्यां सर्वाणि भूतानीति–ह्रीर्भूमिरिलादेवी लक्ष्मीश्च ते पत्न्यौ यस्य स विष्णुरेवायं भवति ब्रह्मविद्ब्रह्मणोरैक्यात्तदारभ्याश्विनौ व्यात्तमित्यन्तं विष्णुस्वरूपवर्णनात् , तदात्मकममुं ब्राह्मणं म निषाणेति वक्ष्यमाणत्वादन्वयो द्रष्टव्यः । उत तयोर्घ्राणेन्द्रियाधिदेवत्वात् तावेव तस्य ब्रह्मविदः सुरभिधूपादिरभवत्, अनेन घ्राणेन्द्रियोपलक्षितसर्वेन्द्रियपाटवत्वं प्रायेण तत्तद्देवतावशीकरणाज्जितेन्द्रियत्वञ्च सूचितं भवतीति भावः । अथ ब्राह्मणमहित्वविज्ञानात्सर्वविज्ञानफलमनुबोधयन्ती सती समापयति–इष्टं मनिषाण । इष्टं यज्ञयागादिकं मनिषाण जानीत अमुं ब्राह्मणं मनिषाण जानीत सर्वं तपोविद्यायज्ञदानादिसमस्तसद्धर्मजातं मनिषाण जानीत हे लोका इति शेषः । अस्यायमभिप्रायः—अमुं ब्रह्मविदं यदि जानीत तर्हि इष्टं यज्ञादिकं कृतं जानीत। किं बहुना सर्वं कृत्यजातं कृतमिति जानीत कृतकृत्यत्वादिमं ब्रह्मविद्वांसं समाश्रित्य सर्वं सम्पद्यत इत्यर्थः । यतो ब्राह्मणस्य माहात्म्यमुपपादयन्ति श्रुतयः—'एष नित्यो महिमा ब्राह्मणस्य, ब्रह्मविदाप्नोति परं, मातृमान् पितृमानाचार्यवान् पुरुषो वेद, ब्रह्म वेद ब्रह्मैव भवति' इत्याद्याः । शान्तित्रयस्यापि फलमाद्यन्तयोरेकार्थत्वादेकमपि तत्साधनानां मृदुतीक्ष्णत्वसंज्ञया किञ्चिदर्थान्तरेण द्वैविध्यमाह । आदावविद्याकामकर्मणां त्रयाणां शान्तिं ज्ञानभक्तिवैराग्यलक्षणसाधनैः सम्पाद्य कृतकृत्यतां लब्ध्वाऽन्ते च पुनस्तेषां यावज्जीवं बहुजन्माभ्यस्तत्वान्मिथ्यात्वदृष्ट्या निषिध्यमानत्वेपि भोगसान्तत्यबलात् पौनःपुन्येन प्रतीयमानानां शान्त्यै वैराग्यबोधोपरमात्साव-

मङ्गलभाष्यम् ।

शीन् परस्परसहायानवलम्ब्य तान्यविद्याकामकर्माणि निर्मूलीकरो-
ीति कृत्वा त्रीणि प्रति तिस्रः शान्तय उक्ता इति ज्ञेयम् ॥ २२ ॥

इतिश्रीमदादिगुरुदत्तात्रेयपरब्रह्मपरदेवताचरणकमलचिन्म-
करन्दास्वादनतुन्दिलेन्दीन्दिरायमाणचेतसा श्रीसत्यभा-
मागोविन्दगर्भाम्बुधिचन्द्रमसा श्रीमन्मौनिकुल-
धर्यनारायणाख्यसदाचार्यकिङ्करेण नित्य-
मङ्गलाख्यविदुषा रचिता श्रीमत्पुरुष-
सूत्रव्याख्या सम्पूर्णा ।

श्रीमद्दिगम्बरार्पणमस्तु ।

महीधरभाष्यम् ।

ऋषिरादित्यं स्तुत्वा प्रार्थयते—हे आदित्य ! श्रीः लक्ष्मीश्च ते
तव पत्न्यौ । जायास्थानीये तद्वश्ये इत्यर्थः । यया सर्वजनाश्रयणीयो
भवति सा श्रीः श्रीयतेऽनया श्रीः सम्पदित्यर्थः । यया लक्ष्यते
दृश्यते जनैः सा लक्ष्मीः । सौन्दर्यमित्यर्थः । अहोरात्रे तव पार्श्वे
पार्श्वस्थानीये । नक्षत्राणि गगनगास्तारास्तव रूपम्—तवैव तेजसा
भासमानत्वात्—'तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलकाः' इति
ज्योतिःशास्त्रोक्तेः । अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विकासित-
मुखस्थानीये अश्नुवाते व्याप्नुतस्तौ अश्विनौ—'अश्विनौ द्यावापृ-
थिव्यौ इमे हीदं सर्वमश्नुवाताम्' इति श्रुतेः । य ईदृशस्तं त्वां याचे
इष्णन् कर्मफलमिच्छन् सन् इषाण इच्छ 'इषु इच्छायाम्' विकरण-
व्यत्ययः । यद्वा 'इष आभीक्ष्ण्ये' क्र्यादिः अत्रेच्छार्थः । किमेषणीयं ?
तत्राह-अमुं परलोकं मे मम इषाण मम परलोकः समीचीनोऽस्त्वि-
तीच्छा अमोघेच्छत्वादिष्टं भवतीत्यर्थः । सर्वं मे मम इषाण सर्वलो-
कात्मकोऽहं भवेयमितीच्छेत्यर्थः । मुक्तो भवेयमित्यर्थः—'सर्वं खल्विदं
ब्रह्म' इति सामश्रुतेः ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
नरमेधाध्याय एष एकत्रिंशोऽयमीरितः ॥

इति भाष्य चतुष्टयोपेतमुत्तरनारायणम् ।

# अथ वैष्णवमन्त्राः ।

## श्रीमत्सायणाचार्यप्रणीतभाष्योपेताः ।

प्रातःसवने सोमातिरेक एकं शस्त्रं शंसनीयम् । तत्रातो देवा इत्याद्याः षड्वृचः । सोमातिरेक इति खण्डे सूत्रितम्—'महाँ इन्द्रो य ओजसाऽतो देवा अवन्तु न इत्यैन्द्रीभिर्वैष्णवीभिश्च' इति । अप्तोर्यामेऽच्छावाकातिरिक्तोक्थेऽप्येताः षड्वृचः स्तोत्रियानुरूपार्थाः । तथा च यस्य पशव इति खण्डे सूत्रितम्-'अतो देवा अवन्तु न इति स्तोत्रियानुरूपौ' इति । दर्शपूर्णमासयोः प्रायश्चित्तहोमेऽप्याद्ये विनियुक्ते । तथैव वेदं पत्न्या इति खण्डे सूत्रितम्—'अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभिश्च' इति । याज्यानुवाक्ययोर्मध्ये लौकिकभाषणेऽतो देवा इत्येषा जप्या । सूत्रितं हि—'आपद्या (द्य) तो देवा अवन्तु न इति जपेत्' इति ॥

अतो दे॒वा अ॑वन्तु नो॒ यतो॒ विष्णु॑र्विचक्र॒मे ।

पृ॒थि॒व्याः स॒प्त धाम॑भिः ॥ १ ॥

विष्णुः परमेश्वरः सप्तधामभिः सप्तभिर्गायत्र्यादिभिश्छन्दोभिः साधनभूतैर्यतः पृथिव्या यस्माद्भूप्रदेशाद्विचक्रमे विविधं पादक्रमणं कृतवान्, अतोऽस्मात्पृथिवीप्रदेशान्नोऽस्मान्देवा अवन्तु । विष्णोः पृथिव्यादिलोकेषु छन्दोभिः साधनैर्जयं तैत्तिरीया आमनन्ति—'विष्णुमुखा वै देवाश्छन्दोभिरिमाल्लोँकाननपजय्यमभ्यजयन्' इति । विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्युपादानम् । पृथिवीप्रदेशाद्रक्षणं नाम भूलोके वर्तमानानां पापनिवारणम् । अतः—एतच्छब्दात्पञ्चम्यास्तसिलिति तसिल् । एतस्नतसोरित्यशादेशः । लित्स्वरेणाकार उदात्तः । यतः—तसिलः 'प्राग्दिशो विभक्तिः' इति विभक्तिसञ्ज्ञायां त्यदाद्यत्वं लित्स्वरः । विष्णुः—विषेः किच्चेति नुप्रत्ययः । कित्त्वान्न गुणः । नित्त्यनुवृत्तेराद्युदात्तत्वम् । विचक्रमे—सुबिति योगविभागाद्विशब्दस्य समासः समासान्तोदात्तत्वम् । यद्वृत्तयोगान्न निघातः । सप्त—सुपां सुलुगिति भिसो लुक् । धामभिः—दधातेरातो मनिन्निति मनिन् । नित्स्वरः ॥ १ ॥

इ॒दं विष्णु॒र्वि च॑क्रमे त्रे॒धा नि द॑धे प॒दम् ।

सम॑ूळ्हमस्य पांसु॒रे ॥ २ ॥

वैष्णवोपांशुयाजस्येदं विष्णुरित्येषाऽनुवाक्या । उक्ता देवता इ-
खण्डे सूत्रितम्—'इदं विष्णुर्वि चक्रमे त्रिर्देवः पृथिवीमेष एता-
इति । गार्हपत्याहवनीययोर्मध्ये श्वातिक्रमणेऽनयैव श्वपदेषु भ-
प्रक्षिपेत् । विध्यपराध इति खण्डे सूत्रितम्—'भस्मना शुनः प-
प्रातिवपेदिदं विष्णुर्वि चक्रम' इति । आतिथ्यायां प्रधानस्य हविष
वैवानुवाक्या । अथातिथ्येळान्तेति खण्डे सूत्रितम्–'इदं विष्णुर्वि-
क्रमे तदस्य प्रियमभिपाथो अश्यमिति' । उपसत्सु वैष्णवस्यैषैवा-
वाक्या । अथोपसदिति खण्डे सूत्रितम्—'गयस्फानो अमीवहेदं
ष्णुर्विचक्रम' इति ॥

विष्णुस्त्रिविक्रमावतारधारीदं प्रतीयमानं सर्वं जगदुद्दिश्य वि-
क्रमे विशेषेण पादक्रमणं कृतवान् । तदा त्रेधा त्रिभिः प्रकारैः पदं
दधे,स्वकीयं पादं प्रक्षिप्तवान् । अस्य विष्णोः पांसुरे धूलियुक्तपा-
स्थाने समूढमिदं सर्वं जगत्सम्यगन्तर्भूतम् ।

सेयमृग्यास्केनैवं व्याख्याता—'विष्णुर्विशतेर्वा व्यश्नोतेर्वा
दिदं किञ्च तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधा-
वाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे
ष्णुपदे गयशिरसीत्यौर्णवाभः । समूह्ळमस्य पांसुर आ-
ायनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात्समूह्ळम-
पांसुल इव पदं न दृश्यत इति । पांसवः पादैः सूयन्त इति पन्नाः
रत इति वा पंसनीया भवन्तीति वा' इति । ( यदिदं किञ्चिद्वि-
ोनावस्थितं तद्विक्रमते विष्णुरादित्यः । कथमित्यत आह—त्रेधा
दधे पदं धत्ते पदम् । निधानैः पादैः । क, तत्र तावत्—पृथिव्या-
न्तरिक्षे दिवीति शाकपूणिः । पार्थिवोऽग्निर्भूत्वा पृथिव्यां यत्कि-
दस्ति तद्विक्रमणे तदधितिष्ठति । अन्तरिक्षे विद्युदात्मना । दिवि
र्यात्मना । यदुक्तम्—तमू अकृण्वन्त्रेधा भुवे कमिति । समारोहण
दयगिरावुद्यन्पदमेकं निधत्ते । विष्णुपदे मध्यन्दिनेऽन्तरिक्षे । गय-
रस्यस्तंगिरावित्यौर्णवाभ आचार्य एवं मन्यते । समूह्ळमस्य पां-
रे । अस्मिन्नाप्यायन एतस्मिन्नन्तरिक्षे सर्वभूतवृद्धिहेतौ यन्मध्य-
तं पदं विद्युदाख्यं तत्समूढमन्तर्हितं न नित्यं दृश्यते । तदुक्तम्-
तनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनमिति । अपि वोपमार्थे स्या-
मूह्ळमस्य पांसुल इव पदं न दृश्यत इति । यथा पांसुलप्रदेशो पदं

न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुभिराकीर्णत्वान्न दृश्यत एवमस्य मध्यमं विद्युदात्मकं पदमाविष्कृतिसमकालमेव व्यवधीयते नावतिष्ठत इत्यर्थः । पांसुर इति रो मत्वर्थीयः । अथ पांसवः । कस्मात्ते हि पादैः सूयन्ते जन्यन्त इत्यर्थः । अथवा पन्नाः शेरत इति पंसनीया ध्वंसनीया ध्वंसनार्हास्ते भवन्ति तदाकीर्णस्य दुर्दर्शकत्वात् । ) त्रेधा । एधाच्चेत्येधाच्प्रत्ययः । चितोऽन्तोदात्तः । समूहळम्, वह प्रापणे । निष्ठेति क्तः । वचिस्वपियजेत्यादिना संप्रसारणम् । ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अस्य, इदमोऽन्वादेश इत्यशनुदात्तः प्रत्ययश्च सुप्स्वरेण । पांसुरे । 'नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्' इति मत्वर्थीयो रः । प्रत्ययस्वरः ॥२॥

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।

अतो धर्माणि धारयन् ॥ ३ ॥

उपसदि वैष्णवयागस्य प्रातःकाले याज्या सायंकालेऽनुवाक्या त्रीणि पदेत्येषा । सूत्रितं च—'त्रीणि पदा वि चक्रम इति स्विष्टकृदादि लुप्यत' इति ।

अदाभ्यः केनापि हिंसितुमशक्यः । गोपाः सर्वस्य जगतो रक्षको विष्णुः । अत एतेषु पृथिव्यादिस्थानेषु त्रीणि पदानि विचक्रमे । किं कुर्वन् । धर्माण्यग्निहोत्रादीनि धारयन्पोषयन् । पदा—सुपां सुलुगित्यादिना विभक्तेर्डादेशः तस्य स्थानिवद्भावेनानुदात्तत्वे प्राप्त उदात्तनिवृत्तिस्वरेणोदात्तत्वम् । गोपाः-गोपामृतस्येत्यत्रोक्तम् । अदाभ्यः-दभेर्ऋहलोर्ण्यदिति ण्यत् । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । धारयन्-शपः पित्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण णिच एव स्वरः शिष्यते ॥ ३ ॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।

इन्द्रस्य युज्यः सखा ॥ ४ ॥

हे ऋत्विगादयो विष्णोः कर्माणि पालनादीनि पश्यत । यतो यैः कर्मभिर्व्रतान्यग्निहोत्रादीनि पस्पशे सर्वो यजमानः स्पृष्टवान् । विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः । तादृशो विष्णुरिन्द्रस्य युज्यो योग्योऽनुकूलः सखा भवति । विष्णोरिन्द्रानुकूल्यं त्वष्टा हतपुत्र

इत्यनुवाकेऽथ वै तर्हि विष्णुरित्यादिना प्रपञ्चेन तैत्तिरीया आमनन्ति । पस्पशे—स्पश बाधनस्पर्शनयोः । लिट् द्विर्भावः । 'शर्पूर्वाः खयः' इति पकारः शिष्यते सकारो लुप्यते । यद्वृत्तयोगादनिघातः । युज्यः—युजेर्बाहुलकात्क्यप् । कित्त्वाद्गुणाभावः । क्यपः पित्त्वादनुदात्तत्वम् । धातुस्वरः ॥ ४ ॥

तद्विष्णो॑: पर॒मं प॒दं सदा॑ पश्यन्ति सू॒रय॑: ।

दि॒वी॑व॒ चक्षु॒रात॑तम् ॥ ५ ॥

सूरयो विद्वांस ऋत्विगादयो विष्णोः सम्बन्धि परममुत्कृष्टं तच्छास्त्रप्रसिद्धं पदं स्वर्गस्थानं शास्त्रदृष्ट्या सर्वदा पश्यन्ति । तत्र दृष्टान्तः—दिवीव । आकाशे यथाऽऽततं सर्वतः प्रसृतं चक्षुर्निरोधाभावेन विशदं पश्यति तद्वत् । सदा—सर्वैकान्येति दाप्रत्ययः । 'सर्वस्य सोऽन्यतरस्यां दि' इति सर्वशब्दस्य सभावः । व्यत्ययेनाऽऽद्युदात्तत्वम् । दिवि—ऊडिदमित्यादिना विभक्तेरुदात्तत्वम् । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चेति तदेव शिष्यते । चक्षुः—नब्विषयस्येत्याद्युदात्तत्वम् । आततम्—तनोतेः कर्मणि क्तः । यस्य विभाषेतीट्प्रतिषेधः । अनुदात्तोपदेशेत्यादिना नलोपः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'गतिरनन्तरः' इति गतेरुदात्तत्वम् ॥ ५ ॥

तद्विप्रा॑सो विप॒न्यवो॑ जागृ॒वांस॒: समि॑न्धते ।

विष्णो॒र्यत्प॑र॒मं प॒दम् ॥ ६ ॥

पूर्वोक्तं विष्णोर्यत्पदमस्ति तत्पदं विप्रासो मेधाविनः समिन्धते सम्यग्दीपयन्ति । कीदृशाः ? विपन्यवो विशेषेण स्तोतारः । जागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः । विप्रासः । आज्जसेरसुक् । विपन्यवो विशेषेण स्तोतारः । स्तुत्यर्थस्य पनेर्बाहुलकादौणादिको युप्रत्ययः । तत्र प्रत्ययस्वरः । जागृवांसः—जागृ निद्राक्षये लिटः क्वसुः क्रादिनियमात्प्राप्तस्येटो वस्वेकाजाद्घसामिति नियमान्निवृत्तिः ॥ ६ ॥

इति वैष्णवमन्त्रभाष्यं समाप्तम् ।